||श्रीः||

# जगद्गुरु श्रीचन्द्रशेखरेन्द्रसरस्वती विजयकाव्यम् ||

# JAGADGURU SRI CHANDRASEKHARENDRA SARASWATI VIJAYAM

(A Kavyam in Twelve Cantos)

By

डाक्टर्, एस्. श्रीनिवासशर्मा




Dr S. SRINIVASA SARMA, M A, Ph D,

[Retired Professor of Sanskrit, Annamalai University]



*Published by*

JAGADGURU SRI CHANDRASEKHARENDRA SARASVATI SWAMI

100th Jayanthi Souvenir Committee,

72, Salai St, Kanchipuram-631502.

1996

# PREFACE

Biographies, brief or voluminous of Jagadguru Pujyasri Chandrasekharendra Sarasvati Swamiji, the 68th Acharya of Sri Kanchi Kamakoti Peetha, have been published in Tamil, Telugu and some other Indian languages Such publications too are not many

Hitherto no regular biographical account of the revered Sage of Kanchi has been brought out in Sanskrit, our rich heritage. On the suggestion of some friends, the Jagadguru Sri Chandrasekharendra Sarasvati Swami 100th Jayanti Souvenir Committee decided to bring out Sanskrit biographies of the Great Acharya.

Happily, two Sanskrit scholars came forward to shoulder the responsibility of writing biographical accounts of the Sage Acharya in Sanskrit, one of them in simple Sanskrit prose and the other in Sanskrit poetry. It needs be said that no biography can do full justice to the long and eventful history of the illustrious Acharya

It is our sincere intention that copies of the two volumes published now, should find place in all University libraries, in libraries attached to voluntary Sanskrit Organisations and also adorn the book shelves of Sanskrit scholars and lovers of Sanskrit all over India

We are greatly indebted to Dr S Jagadisan and Dr S Srinivasa Sarma who have spent much time and have undergone much strain in writing the works and preparing the scripts for print Our grateful thanks are due, in no small measure, to Sri Kamakshi Seva Samithi of Bombay

and the Samskrita Sahitya Parishad of Tiruchirapalli for their gracious donations to cover a part of the printing charges and to Sri Vivek Goenka of the Indian Express News Papers (Bombay) Ltd. for free supply of the necessary paper for printing the two volumes. We record our profound thanks to the printers who have done their job nicely and to all those friends who have been of assistance in bringing out the two works.

Our pranams to Pujyasri Acharyas of the Kanchi Kamakoti Peetha.

Kanchipuram
18.7.96

A. Kuppuswami
Secretary
(Jagadguru Sri Chandrasekharendra Sarasvati Swami 100th Jayanthi Souvenir Committee.)

ॐ

Sri Chandramouleeswaraya Namaha

SRI SANKARA BHAGAVADPADACHARYA

PARAMAPARAGATA

His Holiness Sri Kanchi Kamakoti Peetadhipati

# Jagadguru Sri Sankaracharya Swamigal

SRIMATHAM SAMSTHANAM

NO 1 SALAI STREET KANCHEEPURAM 631 502

CAMP



DATE 18 7 1996

॥ श्री ॥

अस्मत्प्रियशिष्य चिदम्बरस्थ अण्णामलै सर्वकलाशालीय भूतपूर्व संस्कृत-महोपाध्याय श्री एस् श्रीनिवासशर्मा अस्मद्गुरुचरणाना श्री महास्वामिना जीवितचरित्र संस्कृतभाषाया सर्गद्वादशात्मकेन ललित काव्येन संगृहीतवान् इति ज्ञात्वा भृश मोदामहे ।

एतद्ग्रन्थकर्ता, एतत्प्रकटयितार अन्ये च एतत्कैकर्यासक्ता सर्वे श्री महात्रिपुरसुन्दरी समेत श्रीचन्द्रमौलीश कृपयासर्वाणि श्रेयासि अधिगच्छन्तु इत्याशास्महे ।

नारायणस्मृति·

श्रीः

# प्रास्ताविकं किंचित् ॥

अनादिजगदज्ञानध्वान्तध्वंसपटीयसे ।
सच्चिदानन्दरूपाय शान्ताय महसे नमः ॥

'कालो ह्ययं निरवधिर्विपुला च पृथ्वी' इत्युक्तेरनुसारेण देशे देशे, कालेचे महनीया महान्तः बहवः भारत देशमिममलङ्कृतवन्तः । अतिबाल्य एव श्रीमच्छङ्कर भगवत्पादप्रतिष्ठापिते श्रीकाञ्चीकामकोटिपीठे अष्टषष्टितमपीठाधीशतया सिंहासनाभिषिक्ता आबालगोपविदिताः परमहंसपरिव्राजकाचार्याः पूजनीया महास्वामिन इति प्रसिद्धाः वेदानां, शास्त्राणां, वेदोक्तधर्माणां च प्रचाराय, परिपालनायानुष्ठानाय च सतताभियुक्ताः भारतदेशसांस्कृतिकपरम्परायामत्युत्तममुज्वलं च पदमावहन्निति विदितचरम् । दीनोद्धारणम्, देवालयपुनरुद्धारणम्, प्राचीनशिलालेख-लोकगीतागमादीनां पुनरुज्जीवनं तद्द्वारा आस्तिक्य-ईश्वर-भक्ति-श्रद्धासम्पादनं संस्कृतिरक्षणं च तेषां निःश्वासायितमासीत् । श्रीकाञ्चीकामकोटिपीठमात्मनाऽलङ्कृत्य आसप्ताशीतिवर्षान् अतिमानुषाणि, अनन्यसुलभानि, अदृष्टाश्रुतपूर्वाणि नौकान्यपदानानि सम्पाद्य,पूजनीयश्रीमज्जयेन्द्रसरस्वती श्रीपादान् तथा श्रीमच्छङ्करविजयेन्द्र श्रीपादांश्चान्तेवासिन अवतार्य, निक्षिप्य चाशेषं धर्मकर्मजातमचिरादात्मनां शततमे वयसि ब्रह्मीभूता : काञ्च्याम् । धर्ममयं तेषामितिवृत्तं कियद्विस्तृतम्! ।

एकैकोऽप्यंशःमहते काव्याय कल्पेत । अपि च धर्म-परहिताचणै कतानतया दक्षिणापथे प्रतिकुटुम्बं प्रतिव्यक्ति चातिघनिष्ठं सम्बन्धमावह न्निति तत्तदितिवृत्तसङ्कलनेऽतिपरिणाहि, आकाशवदतिविपुलं, शतसंवत्सरव्यापि तेषां चरित्रवस्तु ।

अतः कियन्तंचिदशमेवोपक्षिप्य काव्यमिदं महतां तेषामानन्दाय, अस्तिकानां भक्तानामाश्वासाय च पुरत उपस्थापये, क्षमां प्रार्थयेऽज्ञानत (न त्वनादरत.) अत्रानुपात्तानां चरित्रांशानां विषये ।

काव्यहेतुष्वकिञ्चनमकृतहस्तमपि आचार्यपादेष्वव्याज भक्तिमात्रव्यव सायिनमिमं जनममोघैराशीर्भिस्संयोज्य, 'संस्कृताध्ययनस्य साफल्यं सम्पादितम्' इति प्रोत्साह्य, नियुज्य च निर्वोढुमाज्ञापितवन्तः श्रीचरणाः श्रीकुप्पुस्वाम्यार्यद्वारा । श्रीचरणेषु साष्टाङ्गपातं नमोवाकान्समर्पयामि । गुरुकैङ्कर्यमणिः श्रीकुप्पुस्वाम्यार्यः यावदपेक्षं सहयोगं यथापूर्वं प्रकृतकार्यसम्पादनाय, मदर्थे श्रममविगणय्य सम्भृतवान् । तत्सकाशे निवेदयामि मदीयां कृतज्ञतां नतेन शिरसा ।

काव्यस्यास्याऽऽरम्भादासमाप्ति बहुवारं प्रेषितासु प्रतिलिपिषु परिशीलन-परामर्शदानैः प्रोत्साहितवन्तावुभावादरणीयौ महामनसौ । न केवलं वयसाऽपितु ज्ञानेन, शीलेन, आचार्यभक्त्याऽपि परिणतौ तौ । मम ज्यायान्भ्राता ब्रह्मश्रीपण्डितरङ्गनाथशर्मा, (योऽसौ व्याकरण-साहित्यशिरोमणिः, भूतपूर्व मद्रशासकीयकलाशालासंस्कृतप्राध्यापकः, केन्द्रीयविद्यालयेषु उच्चतमसंस्कृताध्यापकश्च) तथा ब्रह्मश्रीस्वामिनाथ आत्रेयः (आशुकविः, साहितीवल्लभः श्रीकामकोटिपीठ-आस्थानविद्वांश्च बहूना ग्रन्थतल्लजानां प्रणेता च) इतीमौ त्रिकरणैर्वर्धाप्येते कृतज्ञतानुस्मरणपूर्वकम् ।

सर्वविधमसौकर्यमपि अकिंचित्करं मत्वा पूरितं श्रीमतः उप्पिलिमहोदयस्य (Jupiter Paper and Allied Industries, Madras-64) अ तिशीघ्रं, मनोज्ञं च मुद्रणमतिश्लाघनीयमभिनन्दामि ।

सत्स्वपि प्रमाद-भ्रान्तिकृतास्वरस-हेया-पशब्देषु, परमाचार्या णामनुग्रहेणेदं काव्यं समग्रं भक्तानामास्तिकानां रसिकानां च समास्वादनीयं समादरणीयं च भूयादित्याशंसमान........

अण्णामलैनगरम्
20-7-96

रसिकविद्वज्जनविधेयः,
शे. श्रीनिवासशर्मा ।

श्रीमच्चन्द्रशेखरेन्द्रसरस्वती संयमीन्द्राणाम्

अन्तेवासिवर्याणां

श्रीमज्जयेन्द्रसरस्वती संयमीन्द्राणाम्

तथा

अन्तेवासिवर्य

श्री शङ्करविजयेन्द्र सरस्वती संयमीन्द्राणां च

चरणकमलयोः

साष्टाङ्गप्रणतिपूर्वकं कृतिमिमां समर्पयामि



श्रीः

# जगद्गुरु

# श्रीचन्द्रशेखरेन्द्रसरस्वतीविजयम् ॥

1 वि परीतप्रपञ्चात्ममातापितृप्रसादितम्
आनन्दतुन्दिलं वन्दे स्कन्दज्येष्ठं गणेश्वरम् ॥

2 चतुष्षष्टिकलाधारो नृत्तान्तस्फीतडम्बरः ।
तनोतु मे धियं दीप्तां ढक्कानादो नटेशितुः ॥

3 काञ्चीपुर्यां भुवः काञ्च्यां कामकोटिकृतालया ।
कामाक्षी सन्निधत्तां मे चित्ते कादम्बडम्बरे ॥

4 स्वाहाकृतसुधास्वादसरसं साहितीपरम् ।
मधु सारस्वतं दिव्यं सन्निधत्तां हृदम्बुजे ॥

5 वाल्मीकिव्यासमुख्यानां मधुसम्मितवाङ्मयम् ।
मानसास्वादयोग्यं मे नार्थीभवतु सन्ततम् ॥

6 धर्मशर्मपरीवाहं प्रहृष्यत्सुजनोज्ज्वलम् ।
जगद्गुरुपदाम्भोजपावितं नौमि भारतम् ॥

7 आदिष्टोऽभिनवाचार्यैर्बालस्वामिवरैरपि ।
प्रवर्ते पुण्यकाव्येऽस्मिन्महास्वामिकथामये ॥

8 आचार्यादेशमात्रेण सिध्द्यन्त्यर्था महत्तराः ।
तथाऽप्यादरणीयानि साधनानि कियन्त्यपि ॥

9 तेष्वेकः साम्बमूर्तीतिख्यातैरत्र पुरस्कृतः ।
भाषाग्रन्थः प्रतीकाग्र्यः पुण्यश्लोककथासु मे ॥

10 द्वितीयो भगवत्पादो मूर्तिमानेव शङ्करः ।
कामाक्षीरूपसम्पन्नो महास्वामीति विश्रुतः ॥

11 कामकोटिमठाध्यक्षः कीर्तनीयगुणोज्ज्वलः ।
अव्याजकरूणापूर्णदीर्घाक्षः स्वर्णभास्वरः ॥

12 अज्ञानध्वान्तदीपो यो जीवन्मुक्ताग्रणीर्बभौ ।
तस्य दिव्यं चरित्रं चेद्वस्तु सिध्दं कवेर्गिराम् ॥

13 सिध्दाश्चेदर्थसम्भेदास्सिध्दा चेच्छब्दसंहतिः ।
सिद्धश्चेद्गुणसन्दोहः शक्तिस्सा काव्यसिद्धये ॥

14 अभ्यासो नैपुणी चेति द्वयं काव्यस्य दोहदम् ।
यस्य वाऽस्त्युभयं तस्य काव्यबन्धो महोज्ज्वलः ॥

15 आसेतोरातुषराद्रेस्सन्ति मान्याः कवीश्वराः ।
कविताचातुरी येषां प्रथिता नैकवर्त्मनि ॥

16 तदप्राप्यमहापुण्यं सूचयत्सुदिनोदयम् ।
काव्यबन्धे मम प्राप्तं जगद्गुरुपदार्हणम् ॥

17 विचारोऽस्ति न वा कश्चित्काव्यहेतुर्ममेत्यसौ ।
मुण्डनोत्तरनक्षत्रपृच्छेवास्ति विलम्बितः ॥

18 आबाल्याद्गुरुभिःपूर्वैर्यदार्षज्ञानभास्वरैः ।
मृत्पिण्डायितबुद्धौ मे तेजो लोह इवाहितम् ॥

19 पूर्वपुण्यपरीपाकात्काञ्चीसद्गुरुसाधितैः ।
कारुण्यामृतसेकैर्या पात्रता सञ्चिता चिरात् ॥

20 ननु पोतायितं ताभ्यां काव्यार्थे सागरायिते ।
बाहू प्रसार्य वैवश्यादाक्रोशकलुषाय मे ॥

21 पूर्वाचार्यान्नमस्कृत्य मम प्रज्ञाविवर्धकान् ।
तत्प्रतीष्ट पथा गच्छन् जनोऽयमनुगृह्यताम् ॥

22 आस्वाद्यं नैव वाऽऽस्वाद्यं रोचते वा न वेति च ।
अविचार्याधुना सिद्धं पाथेयं प्रतिगृह्यताम् ॥

23 दाक्षिण्यादथवा स्नेहात्कारुण्याद्वा निसर्गतः ।
औदार्यादनुरोधाद्वा चापलं मेऽनुमन्यताम् ॥

24 महास्वामिकृपा मह्यं साह्यं नूनं करिष्यति ।
या पुरा मे जजागार काञ्चीश्रीमठसद्मनि ॥

25 'एकावास' कुटीरे या कृपा या क्षीरिणीतटे ।
'महाग्राम' पदे याऽऽसीत् 'खर्वाट्ग्राम' सीमनि ॥

26 'मीराज' मन्दिरे सद्यः फलदाऽभूत्प्रसूरिव ।
सा चकास्तु ममाऽदृष्टाऽप्यपाये बान्धवायिता ॥

27 गोविन्दवच्छतावर्तेऽप्यानुकूल्यं प्रसेदुषी ।
सर्वदा सिद्धसन्नाहा सन्मनोमात्रगोचरा ॥

28 सत्वासत्वसमानाऽपि सच्छिष्येष्वाशुतोषिणः ।
कृपा सा सद्गुरोरद्य दद्याद्विद्यामहाबलम् ॥

29 भूयान्मे सफलस्तेन प्रयासः काव्यवर्त्मनि ।
कुतुकात्प्रस्तुते पुण्ये महास्वामिकथामये ॥
कामाक्षीसुप्रभातं रचितमिति 'वदन्सुप्रभातं तवापी'-
त्यामोद्यानुग्रहीतुं सपदि नियुयुजे संस्कृताजीविविद्वान् ।
आसन्नां गायिकां तां सुमधुररवं गापयामास पद्यं
तद्द्वारा प्राप्तसम्पत्सुखमततनुत तं सद्गुरु काव्यवर्ण्यः ॥

श्रीचन्द्रशेखरेन्द्रसरस्वतीविजयमहाकाव्ये प्रथमस्सर्गः ॥

# द्वितीयस्सर्गः

1 आभाति देशो निलयः कलानां
चोलाभिधानः कलमाभिरामः ।
सौराज्य साक्षात्कृत नाकलोकः
कावेरिकापूरपवित्रिताशः ॥

2 यस्मिन्महीपा महनीयशीला :
चोलाश्चिरं राजपदे विरेजु : ।
विद्वत्समिज्याकुलदैवतेज्या-
ऽऽसक्तिं समं ये समये बबन्धुः ॥

3 आलम्बिगुच्छैःकलमादिसस्यैः
नीराजनायेव भुवःस्वमातुः ।
केदारखण्डेषु यदग्रहारे-
ष्वासाद्यते काञ्चनदीपसाम्यम् ॥

4 चञ्चद्भुजाग्रैरिव वातलोलैः
पत्रैर्यदीयाः कदलीवनान्ताः ।
आहूय साधून्जगतीगुरूणां
पूर्वश्रमाग्रान्ध्रुवमुल्लिखन्ति ॥

5 ग्रामोपशल्येषु निरन्तरोद्य-
च्छ्रीनालिकेरास्सुभटस्वरूपाः ।
रात्रिन्दिवं यत्र च धान्यगर्भान् रक्षन्ति
सौभिक्षसखान्कटाहान् ॥

6 उच्चावचोन्मेषनिमेषलीला-
सम्भ्रान्तमीनं चतुरस्रगात्रम् ।
स्नानान्त सन्ध्याजपकालमुग्धं
पद्माकरं यत्र जनाः स्वदन्ते ॥

7 संरूढबिल्वाद्यभिरामसीमा
न्युच्चात्मबिम्बानि मनोहराणि ।
'आगच्छताऽत्रे'ति वदन्ति दूरात्
यत्रोल्लसन्त्यालयगोपुराणि ॥

8 कास्ताश्चतुष्षष्टिकला इतीदं
दुर्बोधजिज्ञासितमेवमास्ताम् ।
यत्रैव गत्वा निरणायि साक्षात्
तास्ताः कला एवमितीति दृष्टाः ॥

9 नित्याग्निहोत्रिव्रजपूतभागे-
ष्वद्धा! निरस्ताशुभपैशुनेषु ।
ग्रामेष्वमीषां न हि मे प्रवेशः
मत्वेति गत्वा क्व कलिर्विलिल्ये! ॥

10 तत्रास्ति कश्चित्सकलागमज्ञ-
स्मार्ताग्रजानामधिवासदेशः ।
मध्ये वहन्मन्दिरमैश्वरं तत्
मध्यार्जुनग्राम इति प्रतीतः ॥

11 कर्णाटदेशात्कतिचिच्छताब्दयाः
पूर्वं समीयुर्बहवो महान्तः ।
होशैलवंश्या इममग्रहारं
वासार्थमुत्सारितपापपुञ्जम् ॥

12 वादे विचारे विशदार्यबोधे
सेवासु सर्वेशसमर्चनासु ।
यागप्रयोगे च कलाप्रयोगे
वार्तासु पूर्तेषु च ते प्रवीणाः ॥

13 ऋक्शाखिन स्तान्कुलजान्समेतान्
स्तोत्रे च शास्त्रे च समं प्रवीणान् ।
तञ्जापुरीयोऽमरसिंहदेवः
कांश्चित्सदस्यान्सचिवांश्च चक्रे ॥

14 तद्वंशजातो गणपत्यभिज्ञः
शास्त्री महास्वामिपितुः पिताऽभूत् ।
स्वाध्यायनिष्ठं तमुपागमच्छ्रीः
तत्तत्कलाशास्त्ररसज्ञतानाम् ॥

15 कार्येषु दक्षो गणपो मनीषी
कालेन काञ्चीमठशासनाय ।
सर्वाधिकारी विदधे नियोगात्
पीठे चतुष्षष्टितमधिपस्य

16 सोऽभूच्चतुष्षष्टितमस्य चोर्ध्वं
पीठाभिषिक्तस्य च कालमध्ये ।
पञ्चाशदब्दाधिककालभाजां
निर्वाहकः श्रीमठसत्क्रियाणाम् ॥

17 श्रीकामकोट्यङ्कमठाधिपत्ये
काञ्च्यां चतुष्षष्टितमाधिपेन ।
कामाक्षिदेवीनिलयाभिषेकः
यत्तत्प्रसिद्धं प्रथमं हि कार्यम् ॥

18 कार्यं द्वितीयं तु तदद्वितीयं
श्रीजम्बुकेशाखिलनायिकायाः ।
ताटङ्कसन्धारणमित्यमू द्वे
सर्वाधिकारी निरुवाह सम्यक् ॥



His Holiness at Kanchikode (Kerala) - 1927



His Holiness gazing at the huge audience, gathered at the Sanskrit College campus, Mylapore (Madras) to listen to the Āchārya's discourse – October, 1932



The Āchārya standing before the chariot in which Ādi Śaṅkara's portrait is placed – just before the starting of the procession on one of the days of the Śaṅkara Jayanti festival of Tiruvidaimarudur, (T.N.) – May, 1933.

His Holiness at Mt

(West Bengal), 

October, 1935



His Holiness while staying at Cuttack (Orissa) April – May, 1936




His Holiness Jagadguru Sri Chandrasekarendra Saraswati Swami at *Madras 1957 - 59*



The Āchārya in deep thinking, just before the beginning of a day's session of the first Vyāsa–Bhārata Āgama, Śilpa Sadas - Junior Āchārya making some request. - Elayāttankudi (T N ) - Sept 1962

19. इत्थं महाकार्यधुरन्धरोऽसौ
यावद्बुरुक्त्या ससजे स्वशक्त्या ।
श्रीकामकोटीजगतीपतेस्सः
तावत्कृपानुग्रहपात्रमासीत् ॥

20 अन्यद्विशिष्टं गणपत्युपज्ञं
श्रीपादसत्याशिषि रूढमूलम् ।
श्रीमन्मठीयोदयभद्रपीठं
कार्यं विधार्यं मनसैवमार्यैः ॥

21 अष्टादशेऽदूरगते शताब्दे
देशे महायुद्धभिया विशस्ते ।
श्रीकामकोटीमठधाम काञ्च्याः
क्षेमाय नः प्राप्यत कुम्भकोणम् ॥

22 तन्मूलमुन्मूलितराजमान्य-
ग्रामोपलब्धार्थसहायवाह्यम् ।
श्रीपीठमेवं यदपीषदार्तं
दायं तु मेने बहु शासकीयम् ॥

23 दुःस्थामवस्थां दुरवग्रहीयां
श्रीपीठजुष्टां प्रसमीक्ष्य शश्वत् ।
दूनोऽपि दैवं मनसा प्रतीक्ष्यन्
शास्त्री व्यतीयाय बहून्यहानि ॥

24 सर्वाधिकारी स गणेशशास्त्री
किंचित्प्रतीयेष भयोपशान्त्यै ।
नूनं मठे नूतनशासनेभ्यः
सोऽरोचतोन्मोचितदुर्दिनेभ्यः ॥

25 अत्रान्तरे पञ्चनदा न्निवृत्तः
तञ्जापुरे[1] स्वर्णकुमारिकां ताम् ।
सन्द्रष्टु माराधयितुं च साक्षात्
श्रीस्वामिपादोऽनुपदं प्रपेदे ॥

26 तदा महाराष्ट्रशिवाजिराजः
सुस्वागतीकृत्य गुरूद्वहं तम् ।
आराधयामास सुवर्णपुष्पैः
कुम्भाञ्चितैर्भक्तियुतः स्वगेहे ॥

27 सञ्चित्य ताः पञ्चसहस्रमुद्राः
सौवर्णपुष्पाङ्कनपुष्कलाभाः ।
सर्वाधिकारी स मठीयकोशे
शुद्धात्मभावेन ररक्ष धीरः ॥

28 श्रीस्वामिपादस्तदसाध्यरक्षां
आत्मावबोधे च तदीयबाधाम् ।
प्रस्तुत्य सद्यो विनियोगमैच्छत्
युक्तेषु पात्रेषु, तथाऽऽदिशच्च ॥

29 सर्वाधिकारी मठकार्यवृद्ध्यै
मुद्राभिराभिःकृषिभूमिरारात् ।
क्रेयेति शम्भुर्गुरुराजमूचे
सम्प्रार्थ्य तत्सम्मतिमग्रहीच्च ॥

30 सद्योऽधिरुह्याश्वमथ प्रतस्थे
[2] .कापिष्ठलं द्रष्टु मसौ स्थविष्ठम् [3] ॥
तेनाञ्जसा सादरमर्चितस्सन्
आवेदयत्स्वं चिरकाङ्क्षितं तत् ॥

---

1 Bangaru Kamakshi, 2 Kapisthalam - a village near Tanjavur 3 Muppanar

31 [1]तस्यानुमत्याऽनुगतस्तदीयैः
भृत्यै स्समेयाय मठाधिकारी ।
भूस्वामिनं तं ह्यधिकुंभकोणं
ग्रामोपनामाङ्कमणक्कुडीस्थम् ॥

32. पिल्लैसकाशे स सुवर्णमुद्रा-
राशिं निवेद्य स्वमनीषितं च ।
'एतत्प्रमाणं कृषिभूमिरारात् देया
मठायेति'मनागवादीत् ॥

33 निर्व्याजभक्त्यार्द्रवसौमनस्या-
न्यामोदयन् शास्त्रिवरस्य तावत् ।
श्रीपीठभक्तस्स अणक्कुडीयः
पिल्लै मनस्वी सदृशंव्यतानीत् ॥

34 ग्रामे करुप्पूरितिनातिदूरे यः
कुंभकोणात्कृषिभूमिमृद्धाम् ।
स्वाधीनसिद्धां सहसा मठाय
प्रादापयच्छासनयुक्तिरीत्या ॥

35 इत्थं गणेशाख्यमठाधिकारी
सेवां स्वकीयामुपदीचकार ।
तादात्विकागन्तृमठाधिपाभ्यां
साक्षात्परोक्ष च महत्त्वचिह्नम् ॥

36 त्रेताग्निकल्पा अभवंस्त्रयोऽस्य
पुत्रास्तु तेषु प्रथमःकुमारः ।
पुण्यैर्निजैरग्नि [2] भुवस्सनामा
पश्चात्पिताऽभूज्जगतीगुरोश्च ॥

---

1 Anakkudi Pillai 2 Sri Subrahmanya Sastri

37 वेदेष्वधीती नियमान्नसेवी
शिक्षासु बद्धाङ्गलपाठ्यदीक्षः ।
ब्रह्मण्यवृत्त्याश्रय शोभनाख्यः
साधुः स्वनाम्नोऽर्थमलञ्चकार ! ॥

38 बाल्ये य आसीत्सुहृदस्य पश्चात्
[1]वास्तोष्पतित्वे हि चिरं चकाशे ।
बाल्येऽपि पश्चादपि नास्य मैत्र्या :
[2]श्रीनीलकण्ठस्स बुधो व्यरंसीत् ॥

39 शिक्षोत्तरं सोऽप्यनुकूलवाक्यैः
गोपालरावाख्य [3] महाशयस्य ।
[4] देशीयविद्यालयबालकाना-
मध्यापकोऽभूदधिकुंभकोणम् ॥

40 शास्त्री स सद्यो [5] गृहशिक्षकोऽभूत्
[6] श्रीत्यागराजप्रमुखस्य पश्चात् ।
आचार्यकार्यादथ शासकीये
[7] शिक्षानियोगे तदधीक्षकोऽभूत् ॥

41 शिक्षाकुलेऽध्यासितदक्षिणार्का [8]
ण्मध्ये बहुत्रापि महाशयेन ।
कार्यालयेऽस्तान्तरमेव दध्रे
त्रिंशत्समानामधिकारभारः ॥

---

1 Chief Engineer 2 Tiruvisanallur Sri Nilakantha Sastri

3 Prof Gopala Rao, Govt.College, Kumbakonam

4 Native High School, Kumbakonam 5 Tution Master

6 Kavalakkudi Sri Thyagaraja Mudaliar

7 Govt.School Education Dept.

8 South Arcot District

42 पूर्वार्जितामन्दतपोधनाढ्यः
सन्ध्यासु साध्वीसुमनोनुगासु ।
सङ्गीतरासिक्यवशाद्दिवासा-
वाराधयामास शिवं सुगीतैः ॥

43 प्राग्वासनासिद्धफलं तदीयं
सङ्गीतसाम्राज्यरसानुभावम् ।
प्राचीकशद्गायकवैद्यनाथा [1]
द्येकान्तशुद्धस्वरनैष्ठिकत्वम् ॥

44 माता भवित्री न चिराय साधोः
साध्वी तु नागेश्वरशास्त्रिपुत्री ।
पत्नी बभूवाद्भुतदर्शनस्य
श्रीमत्त्वकाष्ठां स्ववशां ब्रुवाणा ॥

45 नाम्ना तु लक्ष्मीः, महती च सा चेत्
एकान्तबीजं तपसः फलानाम् ! ।
ब्रह्मण्यवृत्तिस्सुजनाग्रगण्यः
शास्त्री न तस्याः कथमस्तु पात्रम् ? ॥

46 इत्थंगतं द्वन्द्वमयोयिष्यत्
स्रष्टा प्रजानामधिभूतलं चेत् ।
श्रीशेषसारोचितचिद्धनाढ्य-
स्वस्वप्रजासङ्घधनं ह्यभास्यत्! ॥

47 स्वाचार्यनागेश्वरशास्त्रियाच्ञा-
भङ्गापहारे प्रयतोऽपि शश्वत् ।
लक्ष्मीं तु साक्षाद्बुबुधे भवित्री
स्नुषां गणेश. श्वशुरीभविष्यन् ! ॥

---

1 Maha Vaidyanatha Bhagavatar

48 यस्याः पिताऽभूत्सकलागमज्ञः
श्रौतप्रयोगेष्वपरो वसिष्ठः ।
गुणाकरो वाक्सरितां पतिस्सु-
ब्रह्मण्यशिष्यादिगणाधिपश्च ॥

49 यस्यास्तु जज्ञे कुलदेवतैव
[1] गोविन्दयज्वेन्द्रकृताभिधानः ।
[2] चेव्वप्पभूनायकसत्कृतो यः
तस्याप्यमात्यस्सुकृतापदानः ॥

50 वाप्यो वनान्ता विपणिः प्रणाली
रथ्योपरथ्या यदुपाधिनाम्ना ।
[3]'अय्ये'ति संयोज्य ननु प्रथन्ते
तस्यास्स गन्धायितकन्दमूलः ॥

51 कावेरिकातीरगतीर्थघट्टाः
चोलाङ्गणेऽनन्तमठालयाश्च ।
बाभान्ति तस्याप्यरुणाचलेश-
क्षेत्राणि कार्यप्रतिभूपदानि ॥

52 तद्वंश्यनागेशसुतेति लक्ष्मीः-
वाक्ये महच्छब्दमपि प्रयोक्तुम् ।
माहात्म्यमीषद्वदितुं च नालं
तस्मात्कथं वर्णयितुं नु शक्यम्? ॥

53 शक्यं तु तथ्यं स्वदितुं तदीयं
वृत्तं महास्वामिकृतानुषङ्गम् ।
प्रासूत यत्सा जननी हि लोक-
क्षेमाय भाग्याज्जगतीगुरुं तम्! ॥

---

1 Rajah Govinda Dikshitar 2 Chevappa nayakar, the first Nayak King of Tanjavur 3 Ayyan Vaikhal, Ayyan Street, Ayyanpet, Ayyan Bazaar etc

54 कुत्रानुरूपा कथमालभेये-
त्येव वधूप्रेषणचिन्तयाऽऽर्तम् ।
तादात्विकं बन्धुकुलं कुतो न
स्वैरं महालक्ष्म्युपचारमिच्छेत्? ॥

55 कालेन भर्तुर्गृहिणीपदे सा
शुश्रूषया स्तोत्रकदम्बगानैः ।
साध्वीव्रतैश्चाचरितैर्निजाख्या
कालं महत्त्वेन पुपोष लक्ष्मी ॥

56 उद्योगरीत्या परिवर्तमाने
तत्तत्स्थले ह्यादृतसन्निवेशौ ।
तौ दम्पती जातु विबोधपुर्यां[1]
गोविन्दरायस्य[2] गृहे न्यवास्ताम् ॥

57 श्रीमज्जयाब्दे वृषमासि पुण्ये
पक्षादिमाहन्यरुणस्य वारे ।
मित्राधिदैवत्यसुतारयुक्ते
क्षेमाय लोकस्य चिदाविरासीत् ॥

58 अज्ञानदावाह्निवशान्विनेतुं
कारुण्यधाराधरबिम्बमुद्यत् ।
आशास्यदाम्पत्यजुषोस्तयोस्त-
ज्जातं द्वितीयं सदपत्यमासीत् ॥

59 उद्यन्निवासीत्सविता द्वितीयः
श्रीशास्त्रिपुत्रः प्रथमो बुभूषुः ।
ब्रह्माद्वितीयं प्रथमं समाख्यत्
पश्चादुदस्यादसमोऽद्वितीयः

1 'விழிப்புப்புரம்' என்று விளக்கம் கொடுத்தார்கள் பூஜ்யஸ்ரீ பெரியவாள் விழுப்புரம் என்று பொதுவாக வழங்கப்படும் பெயர்

2 Govinda Rayar

60. पुत्रः प्रतीतः प्रथमो गणेशः
तस्मात्सनामाऽस्तु गुहस्य सोऽयम् ।
इत्याशया तत्पितरौ दधाते
श्रीस्वामिनाथाख्यममुं द्वितीयम् ॥

61 स्वैरप्रजल्पे कुलदेवतायाः
नामानुसन्धानमभीत्सुरेव ।
शिक्षाधिकारी स पिता कुमारं
श्रीस्वामिनाथं प्रथितं व्यतानीत् ॥

62 काले कृतानामथ गोत्ररीत्या
सम्भावितानां शिशुसंस्कृतीनाम् ।
पात्रं बभूवाद्भुतदर्शनोऽसौ
स्वामी च नाथश्च भवन्स्मृतीनाम् ॥

63 आचार्यवानेव वरो महस्स्वान्
इत्यूचिवांश्चोपनिनाय पुत्रम् ।
आचार्यमन्यादृशमात्मनीनं
कर्तुं व्यवस्यन्निव शास्त्रिवर्यः ॥

64 मन्त्राक्षतैस्तत्समये प्रसादं
श्रीकामकोटीमठधामदेवः ।
अह्नाय षट्षष्टितमोऽधिपो यत्
सम्प्रैषयत्तद्बटुशोभनाय ॥

65 ब्रह्मोपदेशाख्यमहोत्सवान्ते
भेजे पुरस्कारमिषान्मनीषी ।
[1] सूनाम्बटग्रामजनाग्रगण्यः
श्रीस्वामिनाथं ह्यरुणाचलाख्यः ॥

---

1. குணாம்பட்டு ஜமீன்தார் திரு. அருணாசல முதலியார்

66. स ब्रह्मचारी पितुरेव शिष्यः
तत्तत्सकृद्दृष्टमथ श्रुतं वा ।
अध्यैत सर्वं स कुशाग्रबुद्धिः
धान्यस्य सारो हि तदङ्कुरेऽस्ति ॥

67. पित्रा तदाऽध्यासिततिन्त्रिणीव-
न्यास्थानपीठेन निजात्मजोऽसौ ।
प्रावेश्यतार्काडमरीकविद्या-[1]
केन्द्रे द्वितीयोच्चकलाविभागे ॥

68 कण्ठस्थयतापन्नमनाग्गृहीत-
स्तोत्रादिपाठो जननीसकाशात् ।
श्लिष्टार्थभङ्गीभणितिप्रकारैः
आराधयामास वटुस्सतीर्थ्यान् ॥

69 वात्सल्यपात्रं समभूद्विनीतः
पुत्रोऽतिमात्रं स पितुश्च मातुः ।
पुत्रः कनीयानिव शर्वगौर्योः
पार्थेषु कुन्त्या इव मध्यमश्च ॥

70 पाठेषु दक्षास्सहपाठिवर्गाः
स्थातुं न शक्ताः प्रथमांशभाजा ।
श्रीस्वामिनाथेन समं सधीरं
साक्षात्परोक्षं प्रशशंसुरेनम् ॥

71 तस्मै तदा हन्त ! तदादृतायां
सामोदमाम्रेडितजैत्रतायाम् ।
स्वीयः प्रभावः प्रभवो जयाब्दे
हेतू इतीव स्पृहयांबभूवः ॥

---

1 Arcot American Mission High School, Tindivanam.

72 वर्गे, परिक्षाप्रतिवर्षसङ्घ-
स्पर्धासु बैबिल्मंतवाचनेषु ।
ग्रन्थाः पुरस्कारतयाऽऽर्जितास्त-
द्गेहाङ्कणालङ्कराणान्यभूवन् ॥

73 अध्यापको जातु समीक्षकःश्री-
श्रृङ्गारवेलुप्रमुखः प्रसन्नम् ।
दृष्ट्वा मुखं चोत्तरदानदाक्ष्यं
तस्याभवद्विस्मित उत्स्मितश्च ॥

74 *अध्यापकाधीतिगणानुयातः*
प्रायात्परीक्षार्थमथोच्चकक्ष्याम् ।
तत्रानुयोक्तुं पठनानुरूपं
श्रीस्वामिनाथं प्रमुखोऽन्वयुङ्क्त ॥

75 युक्तै रुदारैरनुयोगवाक्यैः
विस्माययामास तथा न सर्वान् ।
धीरोऽयमाख्यापितनैजवृत्तः
श्रृङ्गारवेलुप्रमुखं यथा हि ॥

76 मेधाविनं भाविनमुच्चकोटा-
वाराध्य सर्वे तमधुःप्रमोदम् ।
को वेद मान्यो भविताऽयमारात्
आचार्यवर्यो जगतामपीति ॥

77 मासेषु गच्छत्सु कदाचिदासीत्
विद्यालये वार्षिकसङ्घगोष्ठयाम् ।
शेक्स्पियराङ्गलनाटकं तत्
जान्राजकीयं पठितृप्रयोज्यम् ॥

78 तत्रार्दराल्यप्रभुपाश्रयोग्य-
छात्रान्तरान्वेषणमुञ्जिहीर्षोः ।
प्राचार्यवर्यस्य मतो बभूवा-
ऽप्येकादशाब्दस्तु वटुः पटीयान् ! ॥

79 नाट्यं तदप्याङ्गलबद्धमित्या-
बाल्याद्दृशं प्राक्तनसंस्कृतीद्धौ ।
पूर्वं प्रतिक्षिप्य ततोऽस्य कार्ये
प्रेम्णाऽनुमोदं पितरावधाताम् ॥

80 द्वाभ्यामहर्भ्यामभवन्मनोवा-
ग्वश्यानि तन्नाटकभाषितानि ॥
तैस्तैश्च सभ्यान्ललिताङ्गहारैः
आश्चर्यमग्नानथ सो व्यतानीत् ॥

81 आनन्दसान्द्रान्तरसाधुवादैः
उच्चावचाभ्यासितहस्ततालैः
सभ्यैः पुरस्कारफलोपहारैः
सम्मानितोऽभूत्स नटः कुमारः ॥

82 दुर्दृष्टिशङ्कापरिहारजाते
मात्रा कृते, जाग्रति पुत्ररत्ने ।
धन्यं ब्रुवाणाः पितरं परेद्युः
अध्यापकाश्शास्त्रिगृहं प्रतीयुः ॥

83 आबाल्यादुपलालितो गुरुवरैर्मातापितृभ्यामिव
स्थेमानं गमितः पदात्पदमसौ वाग्वैखरीमुद्रया ।
संभाव्याश्रयं इत्यबाधकलितो निःश्रेयसाधारया
श्रुत्याऽपि स्थिरभावकामनया जेजीयते सद्गुरुः ॥

इति श्रीचन्द्रशेखरेन्द्रसरस्वतीविजये महाकाव्ये द्वितीयसर्गः

# तृतीयः सर्गः

1\. उत्तुङ्गरम्यचतुरस्रवनीविराज-
दार्काङ्गमध्यगततिन्त्रिणिवन्यदूरे ।
ग्रामो 'महामुख'इति प्रथितो विशालः
बाभाति सज्जनमहीसुरवासदेशः ॥

2\. श्रीकामकोटिवरपीठगतास्तदानीं
श्रीचन्द्रशेखरयतीन्द्र इतिश्रुतस्ते ।
षट्षष्टिका गुरुवरा दधुरग्रहारे
विश्वावसाविह हि मासचतुष्कदीक्षाम् ॥

3\. श्रीपादवन्दनमभीष्टफलप्रसूतिं
कर्तुं कृतमनास्सह पुत्रदारैः ।
शास्त्री स लब्धसमयस्समयादुदार-
ग्रामं यदा गुरुवराः कृतनित्यपूजाः ॥

4 भाग्यादुपास्यगुरुदेवकृपाबलाद्वा
श्रीस्वामिनाथमनुपातितसत्कटाक्षान् ।
रुद्राक्षभस्मपरिधूलनभूषिताङ्गान्
मूर्तानिवाद्वयमतान्स गुरूल्वन्दे ॥

5 पूजान्तलब्धकतिचिन्निमिषेषु योग-
क्षेमादि शास्त्रिपरिवारगतं विदन्तः ।
स्वान्ते प्रसेदुरतिमानुषबालमेनं
ज्ञात्वेव लोकगुरवोऽनुगमात्मपीठे ॥

6 तस्यानुवीक्ष्य दिनयुग्मसमादृतेषु
स्वस्यानुयोगवचनेषु समाहितेषु ।
नैपुण्यभक्तिविनयादिगुणांश्च तेजः
आश्चर्यमेव गुरुभिर्बिभरांबभूवे ॥

7. बालोऽचिरादिह महान्भवितेति पश्चात्
ऊचुश्च संनिहितशिष्यगणांस्तदानीम् ।
शास्त्री त्वनन्यमतिरात्तगुरुप्रसादः
प्रत्यासदन्निजगृहं च सपुत्रदारः ॥

8 आमन्त्रणे गुरुवरस्य नियोगरीत्या
बालं निनाय बहुशस्स गुरोस्सकाशम् ।
बाले निपेतुरनुवारमदःकटाक्षाः
कारुण्यशीकरविसारिनवाम्बुवाहाः ॥

9 काले हि गच्छति कदाचिदतर्कितं तत्
बालो न तिन्त्रिणवने समदर्शि गेहे ।
इत्यार्त मातृ-जनकौ समुपेत्य कश्चित्
आश्वासयद्गुरुकुलात्तु दिने तृतीये ॥

10 श्रीस्वामिनाथमनपायमुपेयिवांसं
श्रीस्वामिदर्शनसिसेविषया मठाग्रम् ।
द्वित्रेष्वहस्सुच गृहं प्रति यापनीयं
विद्धीति शास्त्रिवरमाचकथन्मठीयः ॥

11 किं भावि कस्य नु कदा कथमेवमादि-
प्रारब्धसङ्गतिमिहार्हति को विधातुम् ।
एको यतिर्नियमितायतिरेव साक्षात्
पश्यन्करामलकवद्विविनक्ति सर्वम् ॥

12 पक्षेऽन्तिमे मकरमासि पराभवाब्दे
वार्ता मठादधिगता-यदुपाहितोंऽशः ।
सद्यः कुमारसहितोऽत्र समेतु शास्त्री-
त्येवंविधः- प्रवसतोऽस्य कुटुम्बधुर्यैः ॥

13 काञ्चीपुरं सपदि मातृसखःप्रपेदे
तस्मान्मठीयवचनात्कलवाग्रहारात् ।
अद्वैतबोधनचणः स्वयमद्विवीयः
प्रापन्निजाश्रममिवाशु तुरङ्ग्याने ॥

14 षट्षष्टिपीठपतयो विदितात्मवृत्ताः
यास्यन्त एव न चिरेण मसूरिकायाम् ।
पीठाधिपत्यधुरि धूर्वहने प्रजिध्युः ।
श्रीस्वामिनाथमुपनेनुमुपांशु वार्ताम् ॥

15 यात्रान्तरागतविलम्बमथास्य सोढुं
नैवक्षमा गुरुवरा निरणैषुरन्यम् ।
पीठाधिपत्यमनुसर्तुमधीतवेदं
लक्ष्मीपतिं व्रतिनमाश्रमसन्निविष्टम् ॥

16 युक्तोपदेशविधिनाप्यधिकामकोटी-
पीठं हि तेन भजताऽष्टदिनाधिपत्यम् ।
गुर्वाज्ञयेव सफलीकृततन्मनीषा-
शेषेण सन्निधिरसेवि विदेहमुक्तेः ॥

17 तस्माद्गृहीतमहनीयमहोपदेश-
पीठाधिपत्यविभवो विधिवत्कुमारः ।
श्रीकामकोटिमठमादिजगद्गुरूणां
पीठेऽभिषिक्त उदियाय जगच्च पातुम् ॥

18 श्रीस्वामिनाथ इति यो विदितःकुमारः
तुर्याश्रमोपगमनात्स पराभवाब्दे ।
कुंभे द्वितीयदिवसात्प्रथितः प्रथिव्यां
श्रीचन्द्रशेखरयतीन्द्रसरस्वतीति ॥

19 बालस्त्रयोदशवया जितषट्सपत्नः
सन्न्यासभागपि जगत्सुखलाभहेतोः ।
पीठं यदाऽलमकरोत्तु पराभवाब्दे
दैवात्तदा परमतस्य पराभवोऽभूत् ॥

20 किञ्चित्सम ञ्चितकषायसवर्णचेलं
शिष्यास्समीक्ष्य गुरुनाथममुं वदन्ति ।
श्रीस्वामिनाथमपरं प्रणवार्थनाथं
भिक्षाटनेशमपि कर्मठपाठदक्षम् ॥

21 दुस्साधदुश्शकतपश्चरणानि यानि
कालाद्बहोश्चरितमात्रगतान्यभूवन् ।
अध्यात्मशक्तिपरिणाहपरिष्कृतानि
श्रीकामकोटियतिनाऽद्य कृतानि तानि ॥

22 हर्षेऽपि जाग्रति जगद्गुरुपीठमध्ये
वात्सल्यतो व्रतशतान्यनुचिन्त्य सूनोः ।
दुःखं प्रभूतमभवत्सहसैव पित्रोः
राहोर्ग्रहादिव दिनेशविकासमान्द्यम् ॥

23 दुःखं त्यजेतमिह मेऽनुमतिं विधत्तं
कर्तव्यजातमलमस्मि गुरोःप्रसादात् ।
निर्वोदुमित्यनुनिनाय यदा नु बालः
पित्रोर्मनोऽग्निनवनीतदशां प्रपेदे ॥

24 शिष्यानुशासनकृते स्वकृतोपदेशैः
जातो महानिति हृदा बिभरांबभूवे? ।
आहोस्विदेष जगतां गुरुरप्यनाप्यो
नो दर्शनाय कथमित्यनयो र्विदूये? ॥

25 पुत्रीयतां किमपरं फलमस्ति मुख्यं
प्राप्तादनेन जननीजनकद्वयेन? ।
पुत्राख्यरत्नमिदमस्ति परात्मविद्या-
विद्योतितं पृथुजगद्गुरुमाल्यरत्नम् ॥

26 न द्वेष्टि, नु स्पृहयते, न बिभेति लोकात्,
यो वा न वाञ्छति धनं तपसो विभिन्नम् ।
तं योगिनं प्रणतपातिकृपाप्रवाहं
के वा गुरुत्तममिह स्तुवते न भक्त्या ॥

27 आचार्यकोदयमहत्तरसाक्षिदेशात्
आर्काड्मध्यपतितात्कलवाग्रहारात् ।
भास्वानिवोत्तरदिशो गुरुराट्प्रयास्यन्
तत्कुंभकोणनगरं प्रथमं प्रतस्थे ॥

28 चोलाधिराज्यगणनीयशिवालयानां
कावेरिकापरिगतोत्तमशालिधाम्नाम ।
मध्ये सदाश्रमिगणाश्रयमाश्रमाणां
स्थित्यै महानुपजगाम मठोपकेन्द्रम् ॥

29 मध्येपथं बहुमतस्स दिनानि यावत्
त्रीण्येव तिन्त्रिणवनं पितृपादवन्द्यम् ।
सब्रह्मचारिपरिवारजनाधिवासं.
अध्यास्त सन्निधिवशादपनीतदोषम् ॥

30 तद्ग्रामसाधुजनता हि जगद्गुरूणां
अत्यादरात्प्रथमदिग्विजयप्रसङ्गे ।
सुस्वागतप्रमुखपूजनसंविधानैः
प्राथम्यविभ्रमपदं प्रथमं प्रपेदे ॥

31 बालाम्रपत्रकृतमङ्गलतोरणाद्यैः
आसिक्तमार्गपरिकल्पितवर्णकैश्च ।
आध्यापका ववृधिरे कति नित्यपूजा-
द्रव्योपसङ्ग्रहपरा गुरुवर्यभक्ताः ॥

32 शिष्टा यथावदुपनीतवटुप्रणीतैः
वेदानुवाक्यभजनावलिपद्यगीतैः ।
सौवास्तिकाननु महागुरुपादपूजा-
ऽऽसक्ता उपासत गुरुं सह वाद्यघोषैः ॥

33 तैस्तैस्सभक्त्युपहृतै नियमाभिषेक-
द्रव्यैश्च सादरमुपार्जितमालिकाभिः ।
पूजान्तरेषु समयोचितपद्यगानैः
आचार्यपादमभजन्त पुरन्ध्रिवर्गाः ॥

34 बालागजाश्वशिबिकोष्ट्रमुखान्मठीयान्
द्रष्टुं प्रदातुमुत शाकतृणादि तेभ्यः ।
स्मेराननाः कति विशालमठाग्रशाला-
स्वासायमासत इवोत्सवदर्शनोत्काः ॥

35 श्रीचन्द्रमौलिभगवत्त्रिपुरेशिमात्रोः
क्षेमाय सर्वजगतां गुरुभिः प्रणीताम् ।
पूजां निषेव्य तदनन्तरमात्मशुद्ध्यै
तीर्थप्रसादमुपसेव्य च धन्यधन्याः ॥

36 सर्वे च तिन्त्रिणवनाख्यपुराभिजाताः
साक्षात्समागतमिवादिजगद्गुरुं तम् ।
दृष्ट्वोपसेव्य कतिचिद्दिनमात्रमारात्
कालत्रयेऽपि कृतकृत्यतयाऽस्तुवंश्च ॥

37 रुद्राक्षबिल्वतुलसीतिलकादिमाला-
संवेष्टितातिकमनीयनिजोत्तमाङ्गम् ।
सम्पश्यतां गुरुवरं शिवमेव साक्षात्
साफल्यमत्र सुलभं शतजन्मलभ्यम् ॥

38 सच्चित्सुखात्मकपरेशविभासनोद्य-
द्भस्मत्रिपुण्ड्रविधिशोभितफालदेशः ।
श्रीचन्द्रशेखरसमानशरीरकान्ति.
शान्ताकृतिर्विजयतां गुरुसार्वभौम. ॥

39 अत्यन्तशीतलमनादृतदोषलेश
मन्दस्मितादृतमपारकृपाप्रवाहम् ।
शिष्येषु निश्चलमनुग्रहमाददानं
काङ्क्षन्ति मङ्क्षु गुरुराजसुदृष्टिपातम् ॥

40 दोषानुषङ्गबहुलानि तमांसि रुन्धत्
कुर्वत्सुधीकुमुदहासनिमित्तभासम् ।
तन्वद्वचोऽमृतरसैर्जगतां प्रसाद
जीयादिहोदितयतीन्द्रमुखेन्दुबिम्बम् ॥

41 इत्येवमादिविनयाङ्कुरसुन्दराणि -
स्तोत्रप्रसूनविलसत्सुवचोवनानि ।
भ क्तत्यालवालपरिनिष्ठितचित्तमूला-
न्युल्लासयन्त्यमुकशिष्यपुर प्रवाता. ॥

42 अध्यापकांश्च सहमाणवकांश्च सर्वान्
आर्काडमेरिककलालयसन्निविष्टान् ।
प्रत्येकभाषणपुरस्कृतिपारिबर्हैं
तुर्याश्रमी स मुदितानकरोद्यथार्हम् ॥

43 अत्रान्तरे धनिकनागरिकाग्रगण्याः
शिष्या गुरौ किल समेयुषि कुंभकोणम् ।
पट्टाभिषेकमधिपीठममुष्य सम्यक्
सम्पादयेम नचिरादिति ते निदध्युः ॥

44 आचार्यपीठमधितिष्ठति संयमीन्द्रे
भूचक्रवर्तिविभवैरभिमान्यता सा ।
युक्तैव यद्दधति ते जगतो हि रक्षां
आध्यात्मशक्तिभरितास्समुदीतधर्माः ॥

45 आराधितादिमजगद्गुरुरग्रसाक्ष्यं
काञ्चीमहीपतिरिहार्हति राजसेनः ।
यस्संचितात्मविदनुग्रहसम्पदीडयः
आर्षोपलब्धिनिधिगोपकुबेरदेश्यः ॥

46 सच्छायचामरयुगं धवलातपत्रं
हस्त्यश्वदन्तशिबिकाश्च सुवर्णदण्डान् ।
भेरीमृदङ्गपटहप्रभृतीनि सम्राट्-
चिह्नानि सादरमसावुपदीचकार ॥

47 अद्यापि पूर्ववदुदारजनाःप्लवङ्गे
श्रीमेषमासि सुदिने किल सप्तविंशे ।
श्रीचन्द्रशेखरगुरुं ह्युपवेश्य रौप्ये
सिंहासने सकलतीर्थघटैरषिञ्चन् ॥

48 देवार्चनानुपदमार्जिततत्फलानां
तञ्जापुरेशमहिषीकृतसत्कृतीनाम् ।
राज्याधिकारिसभिकप्रमुखार्पितानां
पात्रं बभूव गुरुराट्सदुपायनानाम् ॥

49 गङ्गोदकेन विमलीकृतमेरुतुङ्गे
सिंहासनेऽन्यतरुणारुणदर्शनीयः ।
पट्टाभिषेकविमलीकृतदेहकान्तिः
ओं तत्सदित्युदितमेव हि सोऽध्यधारि ॥

50 तस्मिन्दिने गुरुवरेण निषेवितानां
तत्कुंभकोणनिलयस्थशिवालयानाम् ।
यावच्च"तावदिति तुल्यतयाऽतिरिक्ता
संख्या कथंचिदपि नाद्रियतेति चित्रम् ॥

51 सम्मानिताः कति कलाकुशला महान्तः ?
विद्वज्जनास्सदसि निष्कधनादिदानैः ।
संभाविता कति सहस्रमुतान्नदानैः ?
जज्ञे जनस्य गणने वितथः प्रयासः ::

52 पट्टाभिषेकदिनकौतुकचन्द्रचूडे
सत्पाण्डुवाद्यमुखरे च पुरे प्रदोषे ।
हस्त्यङ्ग-पट्ट शिबिकामधिरुह्यवीथी-
प्रान्तप्रदक्षिणमधाद्गुरुसार्वभौमः ॥

53 तद्दृश्यमीक्षितुमुतोदितुमस्ति कस्या-
प्यङ्कुरितं मनसि चेत्स सहस्रशीर्षः ।
इत्यब्रुवन्कतिपयेऽपि तु नालमेवं
यस्मादनीदृशमवाङ्मनसं तदासीत् ॥

54 आभ्यां किमत्र फलमापि विलोचनाभ्यां
याभ्यां गुरोश्शिवमयं न वपुस्तु दृष्टम् ।
न्यक्कार एव मनुजश्रवसोर्न याभ्यां
सूक्तिःश्रुताऽखिलगुरोरमृतायमाना ॥

55 अव्याजमन्दहसितोपहितोपदेशं
भव्योपसेव्यमधुसम्मितवाग्विलासम् ।
दिव्यापदानमहितोरुयशःप्रकाशं
काव्योपवर्ण्यविभवं गुरुमानतोऽस्मि ॥

56 निश्शङ्कनित्यकलिलादिमतप्रचारं
सम्मोहभीषणभवार्णवकर्णधारम् ।
व्याख्यानदाक्ष्यनिशदीकृतवेदसारं
वन्दे गुरुं कलितसाधुजनोपकारम् ॥

57 इत्यस्तुवञ्जनपदोदरसन्निविष्टाः
पट्टाभिषेकसमये सुगुरोर्विशिष्टाः ।
स्वाभीष्टसिद्धिमनु तुष्टहृदः स्वकीयान्
ग्रामानगुश्च मनसा धृततत्तदाज्ञाः ॥

58 इत्थं त्रयोदशवया महनीयकीर्तिः
वाग्वैखरीसुमधुरीकृतसूक्तिमालः ।
श्रीकामकोटिमठधर्मधुराधुरीणः
श्रीचन्द्रशेखरजगद्गुरुवर्य आसीत् ॥

59 पर्यायसङ्क्रमयो गुरुराङ्घ्रिधातुं
शिष्यप्रजासु निजधर्मविबोधनं तत् ।
यात्रानुवर्तनकृते कृतधीःप्रतस्थे
कर्तव्यधर्मनिभृता हि सदा महान्तः ॥

60 सद्यश्शुभावहमिवेदमसादि वृत्तं
श्रीजम्बुकेशनिलयस्य नवीकृतस्य ।
कुंभाभिषेकसमये सदयं समेत्या
नुग्राह्यमित्यभियियासुगुरोस्समीपम् ॥

61 क्षेत्रं प्रतीतमखिलाण्डसुनायिकायाः
चेङ्गोट्टुचोलनृपनिर्मितमाहुरेतत्
किंचाद्यशङ्करगुरुर्व्यतनोदिहेश्याः
ताटङ्कधारणमुदग्रकलानुभावम् ॥

62 कानाडुकात्तनगराभिजना हि मुद्रा-
लक्षैस्तु भूरिगुणितैर्व्ययितैरकार्षुः ।
सम्यक्परिष्कृतिमधुर्निलयस्य देव्याः
कुंभाभिषेकसुदिनं मकरे प्लुवङ्गे ॥

63 तादात्विकालयचलत्कलशाभिषेके
प्वान्यादृशं पदमगाहत सोऽभिषेक ।
शृङ्गाद्रिपीठगुरवो नरसिंहभार-
त्याख्याः स्वसन्निधिवशात्तमबृंहयंश्च ॥

64 श्रीकामकाटिवरपीठगुरुश्च पूर्वं
सप्ताहतश्शुभदिने प्रतिजम्बुकेशम् ।
प्रायात्ततोऽसमतदीयधुरीणतायां
कुंभाभिषेकमह आभ्रियतानुशास्त्रम् ॥

65 इत्थं समाप्य गजपूःकलशाभिषेकं
द्रष्टुं समाधिमधिपाकपितृव्यकूटम् ।
प्राक्पञ्चषष्टितमपीठपतेः प्रतस्थे
श्रीरामनाथपुरवर्त्म यतीश्वरोऽयम् ॥

66 मध्येपथं कतिचिदाहृतपारिबर्हाः
श्रेष्ठिप्रधानवणिजः कुलजास्समेताः ।
ग्रामेषु तत्तदुटजेषु निवासयित्वा
सश्रद्धमादधत लोकगुरोस्सपर्याम् ॥

67 तत्स्वागत ह्युपहृत स्थिरभक्तियोग
सम्मान्य सोऽपि नवसालपुरीमयासीत् ।
पौराश्चिर यदिह राजकुलोदिताश्च
श्रीकामकोटिमठधामनि भक्तिभाज ॥

68 बालोऽप्यतादृशतपोनिधिरेष जातो
यस्यैव शिष्यहितधुक्स कटाक्षपात ।
इत्यादराद्गुरुवर पुरसीम्नि पूर्ण-
कुम्भादिना च बहुधा समुपाचरस्ते ॥

69 राजा विजेयरघुनाथदुरायभिख्य ।
धीमान्स वेङ्कटपदाहितरामदास ।
अन्ये च शासननियोगभुजश्च मान्या
सम्मान्य तत्र गुरुवर्यमुपासतारात् ॥

70 सच्छ्रेष्ठिजानपदमुख्यशिवालयेषु
क्षेत्र पुराणमिलयत्तकुडीत्यभिख्यम् ।
साधारण तदखिलस्य च नागरस्ये-
त्याहुस्ततो नवनवेष्वपराणि चेति ॥

71 कैलासनाथ इति तन्निलयाधिदेव
कल्याणदा प्रणयिनीमपि नित्यजुष्टाम् ।
सजाग्रतो नगरवासिजनावनार्थ
आबालमास्तिकजना स्तुवते नु भक्त्या ॥

72 श्रीपञ्चषष्टितमपीठपतिर्महाश्च
देवश्च सयमिवर कतिचि त्स मासान् ।
अध्यास्त चान्तिमशरत्सु गते शताब्दे
ग्राम त्विम स्वविजयाङ्कितभूप्रयाणे ॥

73 जातु प्रशान्तरमणीयधरान्तरालं
ग्रामं पदा गुरुवरे परिवर्तमाने ।
वल्मीकवेदिपरिकर्मितभूविभागं
दृष्ट्वा स किंचिदिह विश्रमितं जगाहे ॥

74 'किं शक्यमात्ममठसात्स्थलमर्पितुं तत्?'
इत्यन्वयुङ्क्त स परेद्यवि मन्दिरेशान् ।
'अन्यत्स्थलं गुरुवराय समर्पयिमे'
त्याहुश्च ते सपदि तद्धृदयानभिज्ञाः ॥

75 'आवश्यकं यदुचितं च-तदेव दातुं'
इत्यूचिवान्स गुरुराडपि दैवागत्या ।
मीनाष्टमेऽहनि विरोधिगते च दर्शे
ब्रह्मैव सोपधि बभूव तदग्रहारे ॥

76 तद्देशवासिमनुजैः श्रुतयोगिवृत्तैः
सोद्वेगविस्मयभरैस्तदपेक्षितायाम् ।
भूमावथास्य निरमायि समाधिसौधं
पार्श्वे प्रतिष्ठितमभूच्छिवलिङ्गमेकम् ॥

77 आद्यस्य शङ्करगुरोः प्रतिमासनाथं
क्षेत्रं तदादृतमिहास्ति पितृव्यकूटैः ॥
श्रीचन्द्रशेखरगुरुर्गुरुभक्तियुक्तः
तद्दर्शनाय किल जाग्रदभिप्रयाणः ॥

78 साक्षादुपेत्य नवसालपुरात्समाधि-
स्थानं बभूव सफलागमनो गुरूणाम् ।
भुयोऽपि जम्बुकवनेशमुपेत्य चातु
र्मास्यव्रतं च निरवर्तयदात्मनीयम् ॥

79 तञ्जापुरं प्रतिनिवृत्य ततस्तदानी
जीजाम्बया प्रवरराजशिवाजिनाम्ना ।
रामाम्बया तदितरैश्च कनिष्ठराजे-
नाराधि राजककुले बहुधोपचारैः ॥

80 सामान्यनागरजनाश्च गुरोः प्रक्लृप्ते
सुस्वागते पुरपरिक्रमकौतुकान्ते ।
सोत्साहभक्तिविपुलीकृतभागभाजः
श्रीपादपूजनकृतार्थतया विरेजुः ॥

81 यात्रामिमां परिसमाप्य च कुंभकोणं
प्राग्द्वादशाब्दिकमहामखपुण्यकालम् ।
आत्मीयसन्निधिवशात्प्रगुणीकृतार्धं
कर्तुं कृताशय इवाभिययौ स तूर्णम् ॥

82 आहारपानवसतिष्वपरानपेक्षं
निस्तीर्य शासकनियोगबलात्प्रक्लृप्तम् ।
श्रीकामकोटिमठनिष्ठमपीष्टपूर्ति
सौविध्यपालनमधादिह यात्रिकाणाम् ॥

83 तञ्जापुरेशपरिवीक्षितपूर्वभागं
मार्गं परीयति महामखतीर्थतीरम् ।
हस्त्यङ्कवाह्यशिबिकामधिरुह्य याते
साफल्यमापि नयनैर्व्रतिनामधीशे ॥

84 बाल्ये गुरोः परदुरापमधीतिबोधे-
ष्वालोक्य पाटवमुपाहितशिक्षणेषु ।
आस्थानपण्डितगणेष्वनुचिन्त्य किंचित्
शास्त्रान्तराध्ययनबाधकमास्त चिन्ता ॥

85 भक्ता मठीयपरिवारजनाश्च शिष्या
सेवार्थिनो विदधतेऽध्ययनान्तरायम् ।
आवश्यकं बहिरबाधितमेव किंचित्
स्थानं हि शास्त्रपरिशीलनमूलमन्यत् ॥

86 एवं विचिन्त्य फलितान्तमुदीचि तीरे
ह्येकान्तनिश्चलमखण्डकवेरजायाः ।
माहेन्द्रमङ्गलमिति प्रथिताऽभिधानं
ग्रामान्तरं वरपदं निरणायि सर्वैः ॥

87 यद्ग्रामधामपतितां कृषिभूमिमृद्धां,
अन्नाद्यदायमकरोन्मधुरापुरेशः ।
काञ्चीमठे विजयरङ्गसुचोक्कनाथः
प्राक्शालिवाहनशताब्दिकषोडशाङ्के ॥

88 अत्यायतां प्लवसहायत एव तीर्त्वा
कावेरिकां झटिति दक्षिणता ह्युदीच्याम् ।
माहेन्द्रमङ्गलमुपेतुमलं; न सर्व-
साधारणं गुरुवरस्य समीपयानम् ॥

89 तस्मात्तदेव रमणीयपदं प्रशान्तं
ऐकाग्र्यसाधकमुपात्तमधीतिभोग्यम् ।
तत्राश्रमो जलतटे निरमायि सद्यः
प्रायाद्युवा गुरुवरो ननु कुंभकोणात् ॥

90 अह्नाय लाल्गुडिपुरं गतवान्स मध्ये-
मार्गं गुरुः कति पयान्दिवसानुषित्वा ।
श्रीशङ्करालयगुरूत्तमसत्कुलं चे-
त्याशासु विश्रुतयशा विदधे द्वयं न. ॥

91 व्यत्यस्तवास्तविकसद्गुरुशिष्यभावे-
ऽप्यश्रान्तभक्तिविनयादृतपाठरीतिः ।
अस्माकमीदृगिति दृष्टविधां विधाय
स्वमीभवन्स हि गुरूत्तमतां प्रपेदे ॥

92 तर्के पदे क्रमनिविष्टमनाश्च वाक्ये
वेदान्तशास्त्रसरणौ च शरत्त्रयेण ।
प्रावीण्यमाप परम परमो यतीना
फ्रेंचाङ्गलादिवचसामपि पारदृश्वा ॥

93 दुर्बोधवादजटिलार्थविचारदक्षा
अध्यापका वरगुरोर्बहव प्रसिद्धा ।
माधुर्यधुर्यवचसोऽपि महामहोपा-
ध्याया करामलकवद्धृतशास्त्रसारा ॥

94 तौर्यत्रिकादिसुकलाकुशलाच्च सेवा-
यागान्तुकाद्बुधगणात्कुशली गुरुस्स ।
प्रश्नोत्तरक्रमकृतैस्सरसैर्विचारै
स्तत्व कलाविषयक सकल व्यजानात् ॥

95 आनाय्य कंचिदिह पण्डितवर्यमारा-
न्मुम्बापुरादधिमठ च निवासयित्वा ॥
तस्मादधीत्य मरहट्ठगिरा गभीरान्
ग्रन्थान्सुख ह्यधिजगाम गुरुर्गरीयान् ॥

96 स्वाभाविकी प्रकटयन्निव गाढसक्ति
स्वाध्यायचर्वितसुलक्षणलक्ष्यसारम् ।
कूलङ्कष द्रमिडगीर्गरिमाणमद्धा ।
योगी मिमाय विदुषा सहयोगयोगात् ॥

97 देवारसारतिरुवाचकभाष्यलीला-
श्रीवैभवादिमतमन्त्रपुराणगाथा ।
सायाह्नसूर्यकिरणा इव भेजिरेऽस्मि
निक्षेपरीतिमनुसृत्य जगद्गुरु तम् ॥

98 देवारगायाकवरानसकृन्मठान्त-
वेद्यां निषाद्य मनसोऽभिमता हि गाथाः ।
गातुं नियुज्य बहुशः श्रुतवान्स्वरज्ञः
सारस्वतं पदमुवाह च सार्थकं तत् ॥

99 कावेरिकासिकतिलान्तरभागभाजा
ध्यानस्थितेन बहुवारमभावि तेन ।
प्राप्तान्तरेण बहुधा प्रकृतेर्विलासो
ऽप्येकान्तसुन्दरतमो यतिनाऽन्वभावि ॥

100 दृश्यानि तानि कतिचित्प्रतिबिम्बताया-
मानेतुमाशु सविमर्शमशाद्विधेयम् ।
छायाग्रहे मणिपुटप्रतिपत्तियुक्तीः
युक्तीश्च तत्परिमृजाप्रतिकल्पनादौ ॥

101 एवं स बीजगणिते च खगोलशास्त्रे
श्रीरामशास्त्रिसहयोगबलादधीती ।
वेदे च शास्त्रनिचयेषु कलासु पूर्ण-
ज्ञाता व्यराजत् तदा हि गुरूत्तमोऽसौ ॥

102 माहेन्द्रमङ्गलमशेषकलाविशेषा-
ध्यायस्थलं च चतुरब्दसखं जिहासन् ।
विंशे निधाय पदमायुष आश्रितश्रीः
श्रीशङ्करालयमधादधिपाठशालम् ॥

103 चर्चापुरस्सरमबोधविशङ्कटेषु
प्रस्तुत्य युक्तिशकलं निपुणैर्महद्भिः ।
तत्त्वावबोधचतुरे गुरुराजि तस्मिन्
चातुर्यसूक्ष्मकलनाःस्थिरवासमीयुः ॥

104 विज्ञानशेवधिरसावथकुंभकोणे
स्वीयं मठं न्यवृतत्क्रमशो;ऽनुवर्षम् ।
गङ्गाधराख्यपुरतुङ्गशिवालयान्तः
वैराजलिङ्गशुभदर्शनमन्वभूच्च ॥

105 प्रख्यातचोलनृपनिर्मितमन्दिरान्तः
प्राकारभित्तिषु निरूपितवर्णरूपम् ।
कालातिपातवशतःकलितापहारं
लेखोच्चयं स पठति स्म चरित्रमूलम् ॥

ब्रह्मर्षीणामनर्घा निरतिशयमहाशक्तयो वाग्विकल्पाः
विख्यातं वाऽपि निद्रानिभृतकलितषड्दर्शनीतत्त्व जातम् ।
नैका वा कालिदासादिकविकुलगिरो नूनमाप्यायिता द्राक्
दृष्टायां कामकोटीगुरुवरकलितापाङ्गलीलाविभूतौ ॥

इति श्रीचन्द्रशेखरेन्द्रसरस्वती-विजयमहाकाव्ये तृतीयः सर्गः

श्रीः

# चतुर्थस्सर्गः

1 अशेषविद्याभरणं तपोधनं
सुधासमानाद्भुतवाङ्मयाधिपम् ।
मनीषिवर्गस्पृहणीयकल्पकं
जगद्गुरुं तं जनकं विदुर्बुधाः ॥

2 तपस्समाधौ चतुरस्रगामिनं
कलासु पूर्णं कुशलाग्रयायिनम् ।
व्यलम्बतश्रीर्वयसोऽभिथेव सा
सुधीरमीषत्करलौकिकान्तरा ॥

3 मठस्य निर्वाहकृते तु पालको
न्ययोजि यद्वेङ्कटरामभूसुरः ।
तदेव तादात्विकशासकार्गलं
बहिस्स्यकापट्यनिरोधनोद्धुरम् ॥

4 यदैकविंशाब्दव्या प्रगल्भता-
मयाञ्जयन्त्या गुरुशङ्करस्य हि ।
धुरन्धरोऽभूद्विधिवत्तथाऽप्यसौ
चकार सर्वं प्रतिभूवशङ्कतम् ॥

5 क्रमागताचारमताभिलाषुकं
मठीयमुद्राधिकृतं नियोजयन् ।
असक्त एव व्यवहारपत्रिका
स्वसावभार्योद्धुरराण्मठे धुराम् ॥

6 क्रमाज्ञयन्ती प्रथमस्य सद्गुरोः
विपश्चितामादरतोऽन्वघोषयत् ।
तदैव वेदादिमतप्रचारकं
सदार्यधर्मास्यिमभासि मासिकम् ॥

7 मठीयशिष्यौघहितैषिणा सदा
मठेतिहासस्सह ताम्रशासनैः ।
विशोध्य सम्पाद्य च गोपिनाथराव्
महोदयेनाक्रियतापि मुद्रणे ॥

8 महोत्सवाघोषमिषान्महीयसः
पदस्य सम्प्राप्तिमबोधयन्कधम् ? ।
उपासनं ह्युत्सवसंयुतं मतं
सदौषधं शर्करयेव मिश्रितम् ॥

9 शरन्नवाहाहृतशक्तिपूजनं
जगद्धितायेति जगद्गुरुःस्वयम् ।
मठे हि देव्या नवरात्रमर्चना-
सदाज्यदीपैर्निरवर्तयत्सवम् ॥

10 नवाहसंसाधितलक्षभोजने
तदुत्सवे लक्षविलक्षणाखिलम् ।
विधानमासीद्विविधाज्यहोमक
पुराणपारायणबृंहितक्रमम् ॥

11 तिरुप्पनन्तालमठाधिपादयो
महोत्सवेऽस्मिन्प्रमुखा धनाधिपा ।
गुरुद्वहं सेवितुमातुराश्शिवां
सिषेविरे प्राज्ययधनैरुपाहृतैः ॥

12. मठाङ्गणे प्राङ्ङ्खमण्डपो महान्
वितानवर्णाञ्चितचित्रविस्तरः ।
प्रसूनपुञ्जैःकृतशैलसंभ्रमः
व्यभात्सुधर्मेव सदैवतासनः ॥

13. इतस्त्रयीपाठ अतःपुराणकं
ततोऽपि गीतात्रिशतीप्रवाचनम् ।
पुरो हि चण्डीहवनं क्रमादिति
प्रथा मणिद्वीपगता स्मृता तदा ॥

14 क्वचिद्विपञ्चीकृतनादमोदितां
सरस्वतीमात्ततदीयवाद्यकाः ।
उपासताज्ञेति गुरोर्नु गायकाः
ऋजीषभावं न तदा हि मेनिरे ॥

15. कियान्प्रयासः कतमोऽभवद्विधिः ?
कियत्तु संभारविधानवैभवम् ? ।
युधिष्ठिरानुष्ठितराजसूयकं
तदुत्सवो नूनमधारयत्स्मृतौ ॥

16 स्वकीयशास्त्रार्थविचारवित्ततां
सभास_मार्कि त्रिशतं विपश्चितः ।
प्रकाशयामासुरुदारसन्निधौ
महागुरोर्वागधिदेवतोत्सवे ॥

17 शिवोऽन्नदानाङ्कितशोभनाह्वयः
तदुत्सवे लक्षजनानभोजयत् ।
दिवानशेषार्यगृहं महत्तदा
समग्रभण्डारनिधानमाबभौ ॥

18 वणिग्जना भूपतयो धनाधिपाः
उपाहरन्भोजनवस्तुसञ्चयम् ।
पुरैव मासादपरेऽप्युपानयन्
सहस्रशस्तण्डुलगोणिकास्तदा ॥

19 शताधिके दारुमये कटाहके
दधि प्रपूर्याधिजलं व्यगाह्यत ।
मठापवारे प्रतिवारभोजने
सहस्रपर्याप्तिमकारि शालकम् ॥

20 शिवाधिपत्ये द्विशतं हि पाचकाः
तदा मुदा भीमधियं जगाहिरे ।
कथं नु कस्यापि भवेद्विशिष्टता?
कुतो न तेषु प्रतिभोजतकेष्टता ? ॥

21 कुतोऽपि कस्यापि किमप्युदीरितुं
उपात्तुमागन्तुमृताभिवीक्षितुम् ।
वशेऽलमस्येति स पाचकाग्रणीः
शिवोऽपि रुद्रत्वमधाद्विभावतः ॥

22 क्वचिद्विमानीधियमैधतान्धसं
क्वचिच्च साम्बार्हि गजापवारके ।
क्वचित्कटाहाकृतिपात्रपूरितो
रसोऽप्यशेषैरुपदंशभाजनैः ॥

23 विलासितं शालकमञ्जसा जनाः
सुदूरमुद्गीर्णसुगन्धसम्पदम् ।
तदत्र पूर्णाचितुरस्रशालकं
शिवेन जुष्टं सगणं न मेनिरे ॥

24 नवाहपूर्तौ विजयावहे दिने
गुरुस्तु देवीं परिवारदेवताः
मठाङ्गणोपासनयैव तोषयन्
निशि प्रति क्षेत्रमगात्प्रसादयन् ॥

25 तन्नक्तमध्यासितहस्तिवाहनो
यदा गुरुः पट्टणसत्प्रदक्षिणम् ।
सुदूरसङ्क्रान्तमुदग्रमावहत्
तदा ननन्दुर्हि सहस्रशो जनाः ॥

26 शतं शतं चोष्णमरुत्प्रदीपिकाः
शयद्वये स्फोटकवर्णरश्मयः ।
नदन्ति नादस्वरभाण्डवाद्यका-
न्यपूरयन्नन्तरमन्तरिक्षगम् ॥

27 ध्वनन्ति वेदान्ब्रहव पदावलिं
परे च देवारमथापरे स्तुतिम् ।
शनैश्चरन्तो गजपङ्क्तिमाश्रिता
न किंचिदन्यत्तु तदा विजज्ञिरे ॥

28 अरक्षतां काशिमठाधिपस्तथा
वदान्यपेत्ताञ्चिवणिग्वरस्तदा ।
धुरं वहन्तौ धुरि कार्य दर्शिनौ
गुरोस्तदूर्जस्वलपूःप्रदक्षिणम ॥

29 अशेषसामान्य जना महागुरो.
वपुर्हि तेजोमयमक्षिगोचरम् ।
धरन्त आत्मानममंसतादरात्
कृतार्थ मानन्दभरावशास्तदा ॥

30 समाभृताद्वैतसभाधिवेशनात्
परं महापण्डित माननेच्छया ।
सभां बुधानां त्वरमाण आर्जयत्
जगद्गुरुश्शास्त्रविचारभावुकः ॥

31 दुकूलयुग्मं सहरौप्यमुद्रकं
सशास्त्ररत्नाकरलक्षणाभिधम् ।
तदा समर्प्योत्तमपण्डितौ; ततो
दशाधिकान्द्वादश चाभ्यमानयत् ॥

32 'सनातनं धर्ममभीप्सता स्थिरं
पदे पदे कालगतिक्रमोचितम् ।
कथं नु कार्यं भवतीति' माणवाः
प्रचोद्य धीरा गुरुणा पुरस्कृताः ॥

33 कलालये शास्त्रकलालये च ये
पठन्ति तेषूच्चविधावधीतिनाम् ।
सहायसन्धानमधाद्गुरुस्तथा
सनातने वैद्यविधौ प्रयस्यताम् ॥

34 कलासु भाषा च शिवागमेषु स-
त्कथासमस्याप्रति श्रोगितासु च ।
प्रवीणविद्वन्मणयो हि मानिताः
मठे गुरोश्शश्वदुदग्रसन्निधौ ॥

35 प्रयोगयोगाष्टशतावधानिनां
कुतूहलं कूलमुदश्रयत्परम् ।
उदेत्य काञ्चीगुरुचन्द्रशेखरो
व्यधान्नु तद्वर्धितभूरिभाजनम् ॥

36 शतावधानिप्रवयःपरीक्षणे
परोक्षमालेखिततत्तदुत्तरैः ।
समं स्मालोक्य तदुक्तमुत्तरं
गुरूद्वहोऽराधयदुत्तमं बुधम् ॥

37 महागुरोर्योगरहस्यमाप्तवान्
स राममूर्तिर्मृगनाटको वरः ।
'यमादिनिष्ठानिभृतो गुरूत्तमः
प्रमाणमेतद्द्रुगिति'स्म बोधते ॥

38 कदाचिदध्यासितकुंभकोणकं
तपस्विनं चाक्षुषभाग्यपोषकम् ।
दृशा धनुर्भङ्गनृपो नु धारयन्
अयाचतायातुमुदक्पथा गुरुम् ॥

39 स राजगोपालविपश्चिदग्रणीः
स वास्तुविद्वांश्च मणिक्कनायकः ।
खगोलशास्त्रार्थविचारवित्तकं
महागुरुं सातिशयं शशंसतुः ॥

40 विशाखपूःप्रान्तमुहाम्दापुरे
ततान योऽनर्घमहर्षमन्दिरम् ।
स्वयं स जेक्काप्रभुरीक्ष्य विस्मितो
गुरूद्वहस्याच्छकलाप्रकाशनम् ॥

41 अदृष्टपूर्वानघतत्त्वदर्शिनि
खगोलशास्त्रज्ञगणाभिमानितः ।
इतालिदेशादतिमूल्यसंभृतां
समर्पयामास स दूरदर्शिनीम् ॥

42 महागुरुस्सन्बहुधा महामनाः
मतानि नानामतिभिर्मतान्यपि ।
सभाजयामास सदेशवादिभिः
सदाशयालम्बनमादृतानि चेत् ॥

43 कलाविशेषज्ञतया तपोनिधिः
स्वयं स सङ्गीतरहस्यपारगः ।
मठे सदा गायकसंशयानघ-
श्चकार रागेषु तथाऽर्थतालयोः ॥

44 सविस्मयश्रद्धमुदीक्षमाणस-
त्कलाविदामाश्रयणीयपाटवम् ।
त्रिषु द्वयोः कीर्तनमूर्तिभावने
दिदेश मुख्यं स हि देशिकाग्रणीः ॥

45 तदा स्वकं गानकथासु कौशलं
ससौष्ठवं स्वामिवरस्य सन्निधौ ।
प्रदर्श्य सानुग्रहमात्म सम्पदं
कलाविद. केऽपि किलाभिमेनिरे ॥

46 उमापुरीयस्स बहुश्रुतो महा-
सु-वैद्यनाथार्यविनीतगायकः ।
स्वयं गुरुर्गानरहस्यचर्चया
महागुरोर्गौरवपात्रमाबभौ ॥

47 तथैव कोटीश्वरधामभूसुरः
कदाचिदाचार्यवरानपूर्वया ।
स्ववायुलीनोद्गत भङ्गिमुद्रया
प्रसादयामास स कृष्णनामक ॥

48 सभेशकृष्णाख्यतनूजसयुतो
मयूरपूर्वैणिकवैद्यनायक ।
तदा तदा श्रीमठमेत्य सन्निधौ
महागुरोर्वैणिकवादन व्यधात् ॥

49 रसावहे वैणिकवादनक्रमे
सभेशसम्पादितवायनाञ्चिते ।
सरस्वती स्वैरमधत्त सन्निधिम्
प्रपेदिरे श्रोतृगणाश्च सन्निधिम् ॥

50 कदाचिदेव सकृतूहलाचिता
सभेशगोष्ठी पुरत प्रविष्ट ।
'अहो बतेति' प्रशशास तद्गुरु
शशास त मौनमुदे च सद्गुरु ॥

51 पदे पदे नागसुराजराविति
प्रसिद्धवशीविदुषश्च वायनम् ।
गुरोस्समक्ष समभूत् मठाङ्गणे
सपक्षवाद्यान्तररञ्जनक्रमम् ॥

52 यदादिमाचार्यकथा हि सत्कथा-
प्रसङ्गसङ्गीतकलाविचक्षणै ।
व्यधायि तै पञ्चनदेशशास्त्रिभि
तदग्रिमाश भजते स्म सद्गुरो ॥

53 कथासु सप्ताहविधानविस्तृता-
स्वनुक्षण निश्चलनिर्मलन्तपरै ।
सहस्रशोऽश्रावि जनैर्गुरुस्तम-
प्यमानयत्पट्टसुवर्णकङ्कणै ॥

54 तदा प्रसिद्धा बहवः कथाकला
धुरन्धराः भागवताश्च सन्निधौ ।
गुरोरुदगे कृति कौशलं स्वकं
प्रदर्शयामासुरनुग्रहोत्तरम् ! ॥

55 'मठीयविद्वान्नियतोऽस्तु गायकः'
इतीङ्गिताज्ञामनुसृत्य सद्गुरोः ।
न्ययोजि वाञ्छेश्वररामचन्द्रस-
न्महीसुरः, कीर्तनभासुरो मणिः ॥

56 प्रपूर्वसङ्गीतमहत्वमेलकं
द्विधागतं पारितिमीरिनामकम् ।
प्रयुज्य नादस्वरवाद्यमेकतः
प्रतीकदेवायतनेषु रक्ष्यते ॥

57 मठे गुरूणामनुपाधि रक्षणात् ।
तिमीरिवाद्यं बहुकालनिष्ठितम् ।
त्रिस न्ध्यपूजासमयेषु वादकं
प्रतिप्रसूतं ह्यधुनाऽस्ति षट्कुलम् ॥

58 यदाऽग्युदैन्मानसकल्पना महा-
जगद्गुरोःक्षेत्रसुतीर्थसेवने ।
विशिष्यशिष्यौघसुबोधदेशने
सपादयात्रा मधिशिश्रिये तदा ॥

59 प्रपूर्ववृन्दावन पुण्यमन्दिरं
महागणेशं च मठाग्रशालके ।
उपस्युपास्थाय विधाय विप्रसात्
धनानि दानानि च पर्यगाद्व्रती ॥

60 गजाश्वधेनूष्ट्रमपि प्रवाहणं
सचन्द्रमौलीश्वरपीठमण्डपम् ।
मनोज्ञरूपाश्शिबिकाःपरिच्छदाः
तमन्वगच्छन्द्विशतं च सेवकाः ॥

61 कवेरजाभागवतावतारिका-
प्रतीचभागस्थितनूत्नमन्दिरे ।
दिने तु तस्मिन्विधिवद्व्यधाद्गुरुः
स चन्द्रमौलीश्वरपूजनं मुदा ॥

62 कृताऽऽदिशिक्षापश्चन्दनं निजं
प्रमुख्यशिष्य तद्दहश्च सार्थकम् ।
विधाय तस्मिन्नगरेऽष्ट पक्षकान्
निनाय शिष्यैर्गुरुराट्प्रपूजितः ॥

64 उपस्थिताषाढमहर्षिपूर्णिमां
विचिन्त्य निम्बेशपुराग्रहारजान् ।
उपस्थितान्व्यासमहर्षिपूजनात्
कृतात्कृतार्थानकरोच्च तत्पुरे ॥

65 व्यवस्य वेदानुपुरच्य तत्त्वतः
तदन्तसूत्राणि च लोकसङ्ग्रहम् ।
विभावयन्लोकगुरुर्विभात्यसौ
कथं न वा व्यासगुरु स्समर्च्यते ॥

66 त्रयो मताचार्यवरा हि भारते
मतत्रयाधारमहाशिलायिताः ।
प्रतिस्वतत्सूत्रविमर्शिनीर्व्यधुः
ततो भृशं व्यासमुनिं स्तुमन्ति ते ॥

67. प्रत्यब्दमाराधितकामकोटिका
मठेऽप्यदोव्यासमहर्षिपूजनम् ।
मठाधिपैस्सातिशयं सभक्ति च
प्रद्योष्यतेऽद्यापि जगद्विभूतये ॥

68 यदा विभूषोज्वलमण्डपान्तरे
सतण्डुले राजतकृष्णविग्रहम् ।
सुरानृषीनन्यगुरून्समन्ततः
पृथक्पृथक्स्थान्लिकुचेषु पूजयेत् ॥

69 जगद्गुरुःकृष्ण इति प्रतीयते
न वासुदेवादपरो महर्षिराट् ।
तदेव कृष्णाय समर्प्यतेऽखिलं
यदिष्यते व्यासमुनेस्तु पूजनम् ॥

70 अनन्तरोपस्थितवृष्टिकालिकं
जिहीर्षुरद्धा! कृमिधातपातकम् ।
उवास मासांश्चतुरो यथाविधि
व्रतीश्वरस्तत्पुर एव निर्ममः ॥

71 ततस्समाघोषितशारदोत्सवः
पुरात्पुरं सङ्क्रममाण आसदत् ।
यदा दुरुःपौतकलत्रधामः[1] तं
धनी प्रतीयाय स कन्निवाटिकः[2] ॥

72 महागुरोर्मानसमार्गवर्तिनः
प्रभावतस्तस्य तदोदघोषयन् ।
उदारयात्राप्रथमाब्दपूर्णं
तदग्रहारीयजनास्सकौतकुम् ॥

---

1. சிறுகளத்தூர் 2. கன்னிவாடி ஜமீன்தார்

73 ततः प्रतस्थे कमलालयं महान्
सभक्ति तत्पौरजनैःपुरस्कृतः ।
असेवतेश च तदालयेऽन्वहं
कदान्वहं त्वं भवितेति चिन्तयन् ! ॥

74 महोदयस्नान्सिषेविषामिषात्
बबन्ध यात्रामुपवेदकाननम्[1] ।
सकोटितीर्थे विधिवद्व्यगाहत;
व्रती, ततोऽगस्त्यपुरंन्यषेवत[2] ॥

75 निवृ त्य नागेश्वरपट्टणं मुदा
सदाशिवेनान्यजनैश्च सत्कृतः ।
ददर्श नीलायतलोचनाम्बिकां
कषायवासास्स हि निर्मलाशयः ॥

76 मयूरपुर्यां निरवर्तयद्गुरुः
समर्हणं व्यासमुनेस्तु रौद्रियम् ।
ततो हि मासैस्त्रिभिराश्रिताभय-
प्रदापुरं व्यासपुरं व्यधान्मुनि. ॥

77 विसन्ध्यसन्ध्याजपहोमसेविनां
त्रिवेदपाठे त्रिशतं गुरो. पदे ।
व्यभाद्वटूनामृषिबालभाविनां
मयूरनाथेश्वरवाटिकाजुषाम् ॥

78 श्रिया युतो धर्मपुरे मठाधिप·
समेत्य सन्दर्शनसेवनै.स्वयम्
उपायनैश्चापि महागुरुं तदा
सभाजयामास सुधीर्यथोचितम् ॥

---

1. வேதாரணயம் 2. அகஸ்தியபுரம்

79 महागुरोर्दर्शन भाषणेच्छया
समागते कंचन मुस्लिमान्धकम् ।
तदा तदीयं मतधर्ममन्वशात्
प्रवक्तुमापीत खुरानवाग्रसम् ॥

80 "किमप्युदारं न हि वक्तुमुद्यते
तदेव सत्यं न परेश्वरात्परम् ।
मतं च तद्बोधकमेव सर्वशो
भवत्तु पश्यामि तमेव मानसे ॥

81 यतो दया देववरस्ततो भवेत्
इतीरितं तेन हृदिस्पृगन्वयम्" ।
सभासदस्तत्र निशम्य विस्मिताः
मुहम्मदीयं प्रशशंसुरादरात् ॥

82 समाप्य तच्छारदशारदोत्सवं
महान्स आनन्दनटाभिधे पुरे ।
हरेर्हरस्येत्यविभक्तमादरात्
तदाऽखिलक्षेत्रवरान्स्म सेवते ॥

83 विशिष्य वैद्येश्वरशट्टनाथकौ
असेवत श्वेतवनेश्वरं व्रती ।
कुतो नु संकल्पधिया महाशयाः
उदासते श्रेयसि मार्गदर्शकाः ॥

84 तदस्य च ब्रह्मपुरस्य वैभवं
यदत्र साक्षात्कृतलोकनायकः ।
जगत्प्रसूपायितचित्यशिशु-
शिवावगाय द्रविडीपभासुरैः ॥

85 सदाशिवब्रह्मगुरुर्य आदरात्
परश्शिवेन्द्रस्सुजनैरुपास्यत ।
यदीयनिष्ठाश्रयकामकोटिका-
मठं भासीच्च स योगिनां वरः ॥

86 अघोरमूर्तेर्निकषा च मन्दिरं
समाधिसंस्थोऽपि जनैरुपास्यते ।
इतीव तच्छ्वेतवनं हि पावनं
न्यषेवतास्मद्गुरुराण्महायशाः ॥

87 कवेरजापांपतिसङ्गमस्थले
पवित्रितात्मा स पटीश्वराध्वना ।
महामखस्नानसिषेविषां जवात्
प्रपूरयामास च कुंभकोणगः ॥

88 वर्षद्वयात्पूर्वमुपात्तयात्रिक-
व्रतेन नागामि मठं तु साम्प्रतम् ।
शिवाधिपत्ये समभूद्यथाक्रमं
द्विजातिसन्तर्पणमाचितादरम् ॥

89 पयोमहिम्नां निधिभूतमद्भुतं
महासरोऽनार्जितमध्यमण्डपम् ।
तदाऽऽदिशद्ग्रामधनाढ्यमुत्सुकं
विधातुमारोपितमण्डपं गुरुः ॥

90 गुरूद्वहः पन्तुलुसङ्घवर्तिनः
महामखागन्तुकसेवनातुरान् ।
मुहम्मदीयान्युवकांश्च नन्दितो-
ऽभ्यनन्ददुच्चैश्चषकैश्च राजतैः ॥

1. பட்டீச்வரம்

91 महामखान्ते गुरुदर्शनेच्छया
समागते वृद्धशिवोपनामके ।
कषायचेले स्थिरदेशभक्तितो
जगद्गुरुस्साग्रहमाशिषं दधे ॥

92 स दुर्मतिर्वत्सर एव सर्वशो-
ऽप्युदारसाह्यं खदिरासुमङ्गले ।
महागुरोर्भक्तजनैः प्रसाधयन्
स्वनामदोषादिव लीनतामगात् ॥

93 ततः कदाचिद्विजयार्थयात्रिकं
महागुरुं कुम्भमुखाग्रहारतः ।
उपस्थिताश्वेल्लुपुरादिवासिनः
पवित्रिताः स्नानविलेपनादिभिः ॥

94 हरेर्जनानामृकृषीश्वरादरान्
प्रतीष्टदैवेष्टिसुखासिकानपि ।
यतीश्वरोऽसावधिगत्य विस्मितो
नवैश्च तान्वस्त्रशतैरतोषयत् ॥

95 महागुरोः पादपरिक्रमाङ्कनात्
अमोघभाग्यानि परस्य भागिताम् ।
न सेहिरे माध्यमिकद्विजोषितान्
निवासदेशानतिरिच्य नन्विले ॥

96 नवाधिका ग्रामटिका नवैव ताः
सहस्रसङ्ख्याकजनैर्हि शोभिता ।
कुलक्रमोपात्ततपस्विनिम्नुता
समस्ति येषा मधुनाऽपि तत्स्थले ॥

97 विभूतिमत्त्वेऽपि निरस्तडम्बरं
सुशीलतायामपचारवर्जितम् ।
मनस्वितायां मितमेव जीवनं
सहिष्णुताचारसदाश्रयान्वितम् ॥

98 वसन्ति ते माध्यमिका द्विजोत्तमाः
इतीव तत्प्रान्तमच्छुभूस्थलम् ।
यद्वंश्यविप्रोऽभवदुत्तमो दिवान्
तथा स शेषार्यमहान्मठाधिकृत् ॥

99 समर्प्य भिक्षापदवन्दनादिकं
[1]महागुरुः स्वागतवाचनातुरान्
सम्पन्नतद्ग्रामजनानुपस्थितान्
तदाऽनुजग्राह यतीश्वरो महान् ॥

100 ततश्च मन्नार्गुडिदेशवासिनां
अभीष्टलाभाय समात्तयात्रया ।
गुरूद्वहः प्रीणयति स्म पूवनू-
र्निवासिदेवारकुलीनमाणवान् ॥

101 फलद्वयं ग्रामजनाय सद्गुरुः
दिदेश मासावधिवाससाधितम् ।
यदेकमासीदधिदेवतार्चनात्
परं तु विद्यार्थिविबोधनात्तदा ॥

102 अनन्तरं राघवमार्तरक्षकं
समस्तकल्याणगुणाकरं परम् ।
श्रुते वटुग्रामपदे विलासिनं
प्रणम्य नम्योऽभिययौ महापुरम्[2] ॥

1. வடுஹூர் 2. பெறுந்துறை

103 'जयेति' तज्ज्ञानपदाभिमन्त्रणात्
जितं जगत्या गुरुणेति सम्भ्रमः ।
अभीतिहस्तानुपतत्कटाक्षतो
गुरोर्जितं जानपदैरिति ध्रुवम् ॥

104 प्रसिद्धपाण्ड्यस्त्वरिमर्दनीऽन्वशात्
स्वमन्त्रिणं वातपुरीयसत्तमम् ।
प्रदाय निष्कान्बहुकोटिसम्मितान्
सुखेन विक्रीणय सैन्धवानिति ॥

105 जवान्महातीर्थमयाच्छिवार्चकः
स्वयं विलिल्ये शिवदर्शनादिषु ।
सदा ह्युदारा दृढभक्तिभावनाः
दधत्यनास्थामवरेष्वनात्मसु! ॥

106 ततः कदाप्याचितसत्प्रदक्षिणं
तमात्मनाथो युवरूपसुन्दरः
उपेत्य भक्तं कुरुविन्दमूलतो
ह्युपादिशत्साङ्गशिवात्मसंविदम् ॥

107 शिवैकभक्तस्स हि वाजिविक्रये
प्रणीतनिष्कोच्चयमञ्जसा सुधीः ।
शिवालयोद्धारकृते समार्पयत्
इतीदमैतिह्यमनन्योपमम् ॥

108 तमात्मनाथं सहयोगमङ्गलं
दिने दिनेऽस्मद्गुरुराड्वन्दत ।
विशेषतस्तं कुरुविन्दपादपं
शिवोपदेशैकमहात्मसाक्षिणम् ॥

109 स धूमयानाधिकृतप्रवाहित
प्रयागसामग्रिकतासुखासिकः ।
प्रतीर्य पाम्बञ्जलमध्यपद्धतिं
जगाम रामेश्वरधाम सद्गुरुः ॥

110 सगौरवोपाहृतपूर्णकुम्भत-
त्पुराणदेवालयपूजकोत्तमैः ।
पुरस्कृतः श्रीयतिराड्डुपास्थित
प्रसिद्धरामेश्वरलिङ्गमादरात् ॥

111 कृताह्निकः काञ्चनकान्तिरम्भसः
शुभे मुहूर्ते ध्वनतीव दुन्दुभौ ।
प्रयागसंयोजनहेतुना व्रती
स रामसेतौ प्रचिकाय सैकतम् ॥

112 ततो धनुष्कोटिपद च शारदां
उपासमानो नवरात्रिषु क्रमात् ।
त्रिवारमब्धिद्वयसङ्गमस्थले
महान्स सस्ना च ददा च दक्षिणाः ॥

113 निवर्तमानं पथि कोटितीरतः
ददानमार्ताय धनादि सद्गुरुम् ।
न्यरुद्ध कश्चित्; कलहोद्यतं च तं
समीक्ष्य कश्चित्प्रमुखोऽप्यताडयत् ॥

114 निरुद्धय मौर्ख्य प्रचरन्तमार्तकं
प्रताडयंस्ताडित इत्युभावपि ।
महागुरो स्सा करुणा गरीयसी
ररक्ष यत्तत्कथमत्र वर्ण्यताम्? ॥

115 प्रतिप्रयाणोन्मुखरंहसा गुरुः
स रामनाथाख्यपुरं प्रपेदिवान् ।
सु-रामलिङ्गाह्वयराजसेतुप-
त्यभीष्ट सम्पूर्तिमियेष षड्दिनैः ॥

116 अतीत्य मानामधुरां महागुरुः
शिवस्य गङ्गां प्रयतोऽभिजग्मिवान् ।
उदीतवीचेरिव वीचिमीयुषः
स राजहंसस्य दधार रोचिषम् ॥

117 हरेर्हरस्याप्यनुषङ्गपावनाः
प्रसिद्धदेवालयतीर्थनिर्झराः ।
जगद्गुरोस्तद्विजयार्थयात्रया
प्रपूरिता एव; न केऽपि शेषिताः ॥

118 प्रयाणनिश्शेषितभागताकृशा
ह्यकिञ्चना पाण्ड्यधरेत्यनन्वितम् ।
महागुरोरार्द्रकटाक्षसेचनात्
वसुन्धरा सा समभूद्विराजसा ॥

119 कदम्बमूलोपनिषत्सुभावितं
मुनिस्समीनाक्षिकसुन्दरेश्वरम् ।
उपासितुं सेवितसुन्दरालयः
जवाज्जगाहे मधुरापुरी महान् ॥

120 सवावदूकाः प्रभवो वणिग्जना
महागुरोःस्विाहतवाचनातुरा
सकौतुकंदर्शनसेवनादिक
निषेव्य साफल्यमवापुरञ्जसा ॥

109 स धूमयानाधिकृतप्रवाहित
प्रयागसामग्रिकनासुखासिकः ।
प्रतीर्य पाम्बअलमध्यपद्धतिं
जगाम रामेश्वरधाम सद्गुरुः ॥

110 सगौरवोपाहृतपूर्णकुम्भत-
त्पुराणदेवालयपूजकोत्तमैः ।
पुरस्कृतः श्रीयतिराडुपास्थित
प्रसिद्धरामेश्वरलिङ्गमादरात् ॥

111 कृताह्निकः काञ्चनकान्तिरम्भसः
शुभे मुहूर्ते ध्वनतीव दुन्दुभौ ।
प्रयागसंयोजनहेतुना व्रती
स रामसेतौ प्रचिकाय सैकतम् ॥

112 ततो धनुष्कोटिपद च शारदां
उपासमानो नवरात्रिष्ु क्रमात् ।
त्रिवारमब्धिद्वयसङ्गमस्थले
महान्स सस्ना च ददा च दक्षिणाः ॥

113 निवर्तमानं पथि कोटितीरतः
ददानमार्ताय धनादि सद्गुरुम् ।
न्यरुद्ध कश्चित्; कलहोद्यतं च तं
समीक्ष्य कश्चित्प्रमुखोऽप्यताडयत् ॥

114 निरुद्धय मौर्ख्य प्रचरन्तमार्तकं
प्रताडयंस्ताडित इत्युभावपि ।
महागुरो स्सा करुणा गरीयसी
ररक्ष यत्तत्कथमत्र वर्ण्यताम्? ॥

115 प्रतिप्रयाणोन्मुखरंहसा गुरुः
स रामनाथाख्यपुरं प्रपेदिवान् ।
सु-रामलिङ्गाह्वयराजसेतुप-
त्यभीष्ट सम्पूर्तिमियेष यङ्क्तिनैः ॥

116 अतीत्य मानामधुरां महागुरुः
शिवस्य गङ्गां प्रयतोऽभिजग्मिवान् ।
उदीतवीचेरिव वीचिमीयुषः
स राजहंसस्य दधार रोचिषम् ॥

117 हरेर्हरस्याप्यनुषङ्गपावनाः
प्रसिद्धदेवालयतीर्थनिर्झराः ।
जगद्गुरोस्तद्विजयार्थयात्रया
प्रपूरिता एव; न केऽपि शेषिताः ॥

118 प्रयाणनिश्शेषितभागताकृशा
ह्यकिञ्चना पाण्ड्यधरेत्यनन्वितम् ।
महागुरोरार्द्रकटाक्षसेचनात्
वसुन्धरा सा समभूद्विराजसा ॥

119 कदम्बमूलोपनिषत्सुभावितं
मुनिस्समीनाक्षिकसुन्दरेश्वरम् ।
उपासितुं सेवितसुन्दरालयः
जवाञ्जगाहे मधुरापुरीं महान् ॥

120 सवावदूकाः प्रभवो वणिग्जनाः
महागुरोःस्विाहतवाचनातुराः
सकौतुकंदर्शनसेवनादिकं
निषेव्य साफल्यमवापुरञ्जसा ॥

121 नियोगभाग्भिर्नगरप्रदक्षिणे
त्रिसन्ध्यपूजानियमावधानिभिः ।
गुरोरुपन्याससुक्तितत्परैः
अभावि भव्यैर्मधुरामहाजनैः ॥

122 सकौतुकं सुन्दरदर्शने मनः
सदुक्तिकं शिष्यविबोधने वचः ।
सवर्चसं नित्यतपःक्रमे वपुः
तदा ह्यपुष्णाच्छ्रियमेव सद्गुरोः ॥

123 ततोऽस्मदाचार्यवरः प्रदर्शयन्
नटेशरामार्यसमेष्वमुग्रहम् ।
स्वकीयमासावधिवासपूरणं
व्यधात्सुवृष्ट्या च नदीप्रपूरणम् ॥

124 पदा परिक्रम्य च शालिवाटिकां[1]-
प्रदक्षिणं सद्गुरुराण्महोदयः ।
पुराण्यगस्त्याध्युषिते दिगन्तरे
चिराय गन्तेव दिवाकरोऽकरोत् ॥

125 जनैःप्रतीष्टोऽप्यधिवीरराघवा-
ग्रहारमाराधितयात्रया तया ।
विवेकसंवर्धनसंसद्धये
सहस्रशो मूलधनं महान्ददौ ॥

126 अथादिमाचार्यभुजङ्गसंस्तुत
जयन्तसत्क्षेत्रमुपाययौ व्रती ।
वसन्नुपासाविधिना महागुरु
नुनाव चापञ्चदिन षडाननम् ॥

---

1 திருநெல்வேலி

127 ततोऽनुसन्धाय च ताम्रपर्णिका-
तटेषु तत्तत्स्थलदेवता जवात्।
अशिष्यतान्तर्दृषदग्रहारजः
तपस्विना सप्तदिनेषुसज्जनः ॥

128 भविष्यदारादखिलाण्डनायिका-
मनोज्ञताटङ्कविधानमित्यसौ ।
ततो गमिष्यन्प्रतिजम्बुकेश्वरं
जगाम साक्षादुपधानशैलकम्[1] ॥

129 त्र्यहं वसंस्तत्र, ततोऽप्यदूरतः
रुरोह कंचित्पृथुशैलमुत्सुकः ।
अधित्यकायां परिमेयसेवकैः
ननन्द पश्यन्प्रकृतेः प्रसन्नताम् ॥

130 निवासगुप्त्यादिषु कन्निवाटिका-
नियोगभृत्यैःकृतसंविधानकः ।
द्व्यहं प्रतुष्यन्जगतीगुरुस्ततो
ह्युपास्त योगी फलिनीश्वरं[2] गुहम् ॥

131 अनन्तराक्रान्तपृथक्पथो गुरुः
व्यलम्बत द्राक्तिरुमय्यसत्रके ।
तदा कडीयापटिमुत्तयाह्वयः
सचन्दनं स्वर्णपुटं समार्पयत् ॥

133 नृपो रघुनाथ इति प्रकीर्तितः
सपौरवर्गो नवसालपालकः ।
सपूर्णकुम्भं सहराजगौरवं
पदार्चनं लोकगुरोर्व्यधत्त च ॥

---

1. திண்டுக்கல் 2. பழனியாண்டவர்

134 उपासितुं तामखिलाण्डनायिकां
महागुरुस्तत्रिशिर:पुरं ययौ ।
प्रसूरिवाप्यायितसज्जनव्रजा
कवेरजा यत्र विभाति विस्तृता ॥

136 उपागतं धारयितुं जगत्प्रसूं
सरत्नताटङ्कमिवादिशङ्करम् ।
महागुरुं शैशिर सेवयाऽभ्युपै -
त्कवेरजा सा जननीव साग्रहम् ॥

137 स मातृभूतेश्वं एधतेऽग्रत:
परत्र शेषोपरि रङ्गनायक: ।
स जम्बुकेशोऽपि पुरेऽत्र; तै त्रय:
विभान्ति तस्मात्रिशिर: पुरं न्विदम् ॥

138 विराजते श्रीमठधाम जम्बुके-
श्वरे महर्ष्यादिपरम्परागतम् ।
शिलामयाशेषविभागशोभितं
समीयतेऽद्यापि वटूपदेशकै: ॥

139 इहैव विश्वेश्वरवास्तुविद्वर:
पुरा ह्युपानीयत इत्युदीर्यते ।
विभाति वेदागमकेन्द्रमुच्चकै:
नवीकृतं श्रीमठसंभृतायनम् ॥

140 यदेव रङ्गो जयचोक्कनायक:
ददौ विलिख्यैव च ताम्रशासने ।
श्रुतं द्विरावर्तितविशंतिर्जना:
सहस्रमष्टाधिकमाश्रया इति ॥

141 तदेतदब्मौतिकजम्बुकेश्वरं -
विभाति सत्क्षेत्रमुदारविभ्रमम् ।
यदादिमाचार्यपदैर्विभूषिता
सदाऽधितिष्ठत्यखिलाण्डनायिका ॥

142 यदा कदाचित्कथमप्यशुद्धता
भवेत्तु ताटङ्कगता तदुद्धरे ।
नवीकृतौ वा ननु कामकोटिका-
मठस्य जागर्ति शतं स्वतन्त्रता ॥

144 अभून्न जाने कतिवार मीदृशं;
अभूच्चतुष्षष्टितमाधिपस्य तु ।
गते शताब्दे, समयेऽथ साम्प्रतं
समागतोऽस्म यग्गुरुरेतदर्थतः ॥

145 महागुरुस्वागतसत्कृतिष्वधुः
तदा नटेशार्यमुखा धुरीणताम् ।
पुरप्रवेशस्समभून्महागुरोः
अपूर्वकोलाहलसंभृतं महः ॥

146 स्वजैत्रयात्रामनुराघवादृतं
पुरप्रवेशं सरयूस्सरिद्वरा ।
पुनस्समीक्ष्येव कवेरजात्मना
गुरोः पुरो हर्षविशालतां दधौ ॥

147 दिनत्रया दाचित यागवेदिका
श्रुतित्रयीपाठसुनामकीर्तनैः ।
प्रगीतदेवारपदैश्च वाद्यकैः
चिराय नादात्मकतां प्रपेदिरे ॥

148 यथावदेत न्महनीय वैभवं
पुरप्रवेशादिककार्यकल्पनाः ।
निकाममुत्साहविभुत्वशालिभिः
मठीयशिष्यै र्बिभरांबभूविरे ॥

149 अहस्सु सप्त स्वधिरोहिसद्व्रकं
सदन्नदानं शिवसाधितं तदा ।
दधे भरद्वाजकृतादनूनतां
इति स्मरन्ति स्मरणीयवैभवम् ॥

150 तदा महाजानपदास्तिकद्विज
प्रधीप्रधाना धनिकाधिकारिणः ।
शिवार्चका ब्रह्मसमाजिवैष्णवाः
महच्च सम्मेलनमध्युपासत ॥

151 'कथं नु शक्यं मतधर्मनिष्ठतां
प्रदेशकालानुगतिं च रक्षितुम् ।'
विचारमेवं विषये व्यतानिषुः
महागुरोराशिषमाप्य ते तदा ॥

152 स्वतन्त्र वादप्रतिवादचर्चिताः
ततः प्रमेया बहवश्च निश्चिता. ।
मठोपलक्षे निगमागमालय-
प्रधानकेन्द्रं निरणायि तेजितुम् ॥

153 यथावकाशं परिसेवितालयः
समाश्रितारामसुपर्णशालकः ।
उपस्थितान्श्रावयति स्म सद्गुरुः
सनातनं धर्ममुपात्तहास्यकम् ॥

154 पुराण नूत्नोभय वस्तु विस्तरः
सहास्यसंभेदविमर्शधोरण ।
स चिद्विलासंश्चिरमास्तिकै र्जनै
अशेषमासेव्यत लोकसद्गुरोः ॥

155 शास्त्रार्थानां दिशि दिशि जनैर्गोपितानां कलानां
एकं क्षेत्रं प्रसृमर महातेजसां सज्जनानाम् ।
रक्षास्थानं स्थितिगतिधृतिष्वाश्रयो धर्मदीप्त्याः
काञ्चीपीठे विलसति तमां सार्वभौमो गुरूणाम् ॥

श्रीः

# पञ्चमः सर्गः

1 सुकृतनिकरशेषैः स्वर्गिणो गां गतान्या
सततममृतपूरैर्धापयन्तीव माता ।
सकृदपि कृतमज्जांस्तन्वती देवरूपान्
विलसति विपुलदेहा शुभ्रकावेरिका सा ॥

2 सकृदपि सुकृतौघैः पीतकावेरितोयाः
ग्लपितदुरितदोषाश्शुध्दबाह्यान्तरङ्गाः ।
परिचितसुरलोकास्वाद्यसारा नरा अ-
प्यभिमतमनुदायं पुण्यलभ्यं लभेरन् ॥

3 प्रतिपदतटराजत्क्षेत्रनित्याधिवासात्
हरिहरललिताद्यास्त्यक्तनैजप्रदेशाः ।
दधति कलितमोहान्कुत्र वाऽस्मन्नियोगः
इत इति गणदेवान्देवता दासभूतान् ॥

4 परिसरपरिसर्पत्कुल्यतोयैकवृत्ती-
ननुपधिफलभारैः पूरितातिथ्यधर्मान् ।
श्रुतिमधुरविरुत्वद्वैजवर्गोपसेव्यान्
दधति तरुमहर्षीन्साधु यत्राग्रहाराः ॥

5 कति कति यतिधामान्यत्र कावेरिकायाः
उभयतटविराजद्ग्रामसीमाश्रयाणि ।
किमपि हि गणनार्हं तेष्वकृक्षत्सपर्या-
कृतिषु सुचिरकालादस्मदाचार्यवर्यम् ॥

6 नियततपसि [1] नेरूर्ग्राममध्यासत श्री-
परमशिवयतीन्द्रान्स्वान्गुरून्ख्यापयन्तः ।
इह [2] सततशिवेन्द्राः मोक्षमापुर्यतस्ते
तदिदमसदृशार्ध ब्रह्मधाम प्रतीष्टम् ॥

7 अधिकृतजगदम्बाताडपत्रोपचारं
सपदि विजययात्राविस्तरेणोपयातम् ।
समुचितविधिरम्यैरादरात्स्वागतोच्चैः
अभिययुरथ नेरूर्ग्रामजाता महान्तम् ॥

8 महितपरशिवेन्द्रं निस्तुलैः कामकोटी-
मठगतगुरुरत्नैर्मालिकां संभरन्तम् ।
विरचितकृतिरत्नं कीर्तितब्रह्मनिष्ठं
व्यधित गुरुवरोऽयं वन्दनैस्तं महिष्ठम् ॥

9 कलितविभवलीलं विस्तृतात्मप्रभावं
विवृतनिजसमाधिं योगिनामग्रगण्यम् ।
प्रणति शतसहस्रैर्वन्दनीयं महान्तं
गुरुरभजत चाह्रां सप्त बृन्दावनस्थम् ॥

10 अथ परिसरदस्मत्पूज्यपादं कथंचित्
श्रवणकटुकवार्ता प्रापिता मुख्यशिष्यैः ।
"मतविनिमयमिच्छुः केरलीयो युवा सन्
कथमपि न विनेयः क्रैस्तवोपासयेति ॥"

11 "प्रतिमतमुपदिष्टाः केऽपि सामान्यधर्माः
तदुपरि कथिताः केऽप्यासते मुख्यधर्माः ।
प्रथमनिपतितो नो मोक्षमाप्नोत्यसाधुः
इहपरसुखमोक्षः स्साधुरेको विशेषैः ॥"

---

1 Nerur Village, Trichy 2 Sadasivendra

12 इति सरसविमर्शैश्शोधितश्चोपदेशैः
गुरुवरकरुणायाः पात्रमासीद्युवाऽसौ ।
सपदि स गुरुदेवं वन्दनैस्तोषयित्वा
विमलमतिरयासीत्केरलान्कल्पमानः ॥

13 निरतिशयतपोभिस्तामसीं वृत्तिमेवं
भिदुरमधिकवेगादीश्वरांशं दधानम् ।
कति कृतकलिदोषध्वंसमुत्तंसयन्तः
गुरुमणिमुदयन्ते भाग्यवन्तो महान्तः ! ॥

14 कतिपयसमपूर्व [1] पाठकग्रामवासी
यतिरिव मितभाषी धारयन्कुंभमेकम् ।
प्रतिदिनमिलदन्तर्नाणकं चीयमानं
पथिषु परिसरंश्चाकृक्षतायाचितायम् ॥

15 चिरमुपचितनाण्यैरादराद्गेपुरं सः
शिथिलमतिपुराणं नागनाथालयस्थम् ।
स्वमनसि निरणैषीदुद्दिधीर्षुर्महार्धं
तदिति विदितमेवाप्यागमोक्तं विजानन् ॥

16 प्रवसदभियियासु गोपुरे दृष्ट एव
स्मरति च यदि देवं, सार्थकस्त्वैरयात्रः ।
इति किल चिरकालात्कृष्णदेवादयस्ते
दिशि दिशि निरमासु गोपुराणां शतानि ॥

17 निरुपमविभवास्तत्तादृशास्संभृताश्चेत्
अविकल मतिवेगाज्जृंभयन्ति श्रियं नः ।
किमुत! तरणिरोचिस्सेवने योगदानात्
उपचितमहिमाढ्यं नागनाथालये तत् ॥

1. Pathakacheriswami

18 इति कृतमतिरार्द्रैरास्तिकानां सहायैः
उचितपरिकरौघै श्चालयं शोधयित्वा ।
चरितुमपि शुभेऽहन्यस्य कुंभाभिषेकं
समभवदभियुक्तः पाठकच्चेरिधर्मी ॥

19 प्रथमगणनमर्हन्त्यर्चकाश्शिल्पिनो वे-
त्यजनि विवदमानैस्तैस्तु कुंभाभिषेके ।
गुरुवरकृतनीत्या शास्त्ररीत्या च पूर्णः
तदनु स घटसेकस्सोऽपि धर्मी कृतार्थः ॥

20 इतरदपि - यदग्रे कुंभकोणे मठस्य
प्रतिदिनगुरुसेवासंचितश्रीकटाक्षः।
निलयमधि कश्चित्कालहस्तीश्वरस्य
स्वकलितकणनाण्यैर्गोपुरोद्यापकोऽभूत् ॥

21 'मनसि यदि समिन्धे धैर्य-मुत्कं मनो वा
महदपि शुभकार्यं कर्तुमीष्टे कृशोऽपि ।
इति कति शिवभक्तानाग्रहानुग्रहैश्च
प्रतिदिनमुदयुङ्क्ताऽस्मद्गुरुत्तंस एव ! ॥

22 तदनु सपरिवारं [1]पेट्टवायुस्थलाग्रं
उपगतमुपनाम्ना देशबन्धुं मुनीन्द्र ।
मधुरवचसि [2]सीयार्दास संज्ञं स्वराज्ये
स्वमतनिरुपरोधं सोऽन्वशाद्देशसेवाम् ॥

23 बहुजनमतगोप्त्री हैन्दवस्वास्थ्यनेत्री
गुरुवरगुणधात्री कामकोटीशनेष्ट्री ।
निजपरविनियन्त्री मद्रराज्याधिगन्त्री
पनसलनृपजेत्री धर्मरोह जीयात्! ॥

---

1 Pettavaithalai, Trichy Dt  2 Desabandhu C.R. Dass

24 सकलजनहितैषिस्वामिसम्मानितां तां
गुरुमतमतरक्षादीक्षितो [1] रामचन्द्रः ।
पनखलनृप [2] साक्ष्ये मद्रराज्याङ्गधर्म-
स्थितिनियमसभायामभ्यघाद्धर्मरक्षाम् ॥

25 उपचरितशु[3]कतातं जम्बुकेशाधिवासे
चरितमहित चातुर्मास्यमाचार्यवर्यम् ।
[4]परमपुरुषदासेनागमन्दर्शनार्थं
परिसरपरिवर्तीन्यग्रजानां कुलानि ॥

26 तदुपरितनवर्षेऽस्मत्पूज्यपादे यतीन्द्रे
सविभवविधिनिष्ठे व्यासपूजां दधाने ।
अपरिमितमुदेव प्रावहत्पञ्चनद्यां [5]
कथमपि परिपूर्णा भ्रान्त(!) कावेरिका सा ॥

27 जलमयमिव सर्व प्रान्तमा दृष्टिपातं
समभवदधिपुष्यं यत्र पूजावितानम् ।
हरिजनवसतीनां वस्तुभाण्डादिकानां
कियदपि परिशिष्टं नाभवद्वारिपूरे ॥

28 क्षयितमजगवादि भृंशिता पर्णशाला
पतितमुटजदारु स्पन्दितं जीर्णकुड्यम् ।
विधुतमहिषबृन्दं वारिपूरस्य जाड्यात्
शयितपृथुकमारात्प्रान्तमासीदनाथम् ॥

29 किमपि करुणदृश्यं पश्यतां सज्जनानां
गुरुवरशिवपूजामण्डपं तं जलाक्तम् ।
मनसि यदभवद्दुःखमेतन्न शक्यं
वचसि च विवरीतुं; तेऽभजन्मूकभावम् ॥

---

1 Sri V G Ramachandra Iyer 2 Panagal Raja 3 Vyasa
4 Purushothaman Dass, 5 Thiruvaiyaru

30. गुरुवरकरुणा सा सम्सगज्ञास्यत द्राक्
यदि किल सकलं तद्दुःखमुद्धर्तुमिष्टा ।
सततमशनपानेष्वन्त्यजानामपीष्टे-
ष्वतिशयपरिपाटी तत्कृताऽद्रक्ष्यतारात् ॥

31 विपदि सहकृतिर्या निस्सृता दैवनिष्ठा
समुचितसमये सा सद्गुरोः स्तोतुमर्हा ।
निजविषमदशायामाचरन्नात्मनीनं
विलसति गुरुरेकः कामकोटीश्वरो नः ॥

32 समजनि जलपूरोत्पीड एवं च [1]कुल्ना-
जनपदमधि गङ्गनपोषकारण्यनद्याम् ।
अशनवसनहीना विप्लवोपद्रुतास्त-
न्नगरजनगणः प्राग्वङ्गदेशे विषेदुः ॥

33 तदुदयनिधिकार्ये [2]हिन्दुपत्राधिपेन
स्वरचितदिनपत्रप्रार्थनायाः सुरद्रुः ।
सकरुणगुरुवर्योपाहृतो द्रव्यराशिः
बहुतरमुदवाप्त्यै कल्पते स्माखिलानाम् ॥

34 श्रुतचरमिदमेवं कुंभकोणे कदाचित्
पदजवसतिमध्ये वह्निदाहे तथैव ।
क्षयितकृषिकलापेऽवग्रहे तञ्जपुर्यां
सकलमपि कृपालुस्साधुसौख्यं व्यधात्तु! ॥

35 अमितकरुणयैवं सन्दधानस्य सौख्यं
निखिलजनशुभंयोस्सद्गुरोर्यात्रिकस्य ।
कति कति जनपल्लयश्चेरिका ग्रामखेटाः
पदमिलनमवापुर्धन्यभावं च पूर्णम् ॥

1 Kulna Small Town in the West Bangal
2 Editor of 'The Hindu'

36 अथ गुरुवरभा स्वान्मन्दिर[1]स्थानमार्गान्
अवितथपदपांसुस्पर्शभाग्यान्विधाय ।
सपदि निजनिकेतं विश्रमायेव गच्छन्
श्रुतचरशिवदेशं[2] कट्टुपल्लीमयासीत् ॥

37 गुरुकुलमिव तत्रश्री शिवस्वामिविद्या-
निलयमभिगतस्तैः स्वागतेनार्चितस्सन् ।
उपनिषदि विशेषात्प्रस्तुतैश्चोपदेशैः
सरसमनुशशासाध्यापकान्माणवांश्च ॥

38 तदनु निकटवर्ती[3]वल्लनामाधिवासः
गुरुवरकरुणायाः पात्रमासीत्प्रयाणे ।
यदधिलसितहिन्दुक्रैस्तवाहम्मदानां
समरसमतधारा सुद्रुतं साध्वताप्सीत् ॥

39 किमपि हरिजनास्ते, क्रैस्तवाः किञ्चिदन्यत्,
किमपि महमदास्ते हिन्दुभिस्साधमेवम् ।
सहमतिमनुभूय स्वागते पूःप्रवेशे
गुरुचरणसपर्या सम्यगाबभ्रुरिद्धाम् ॥

40 प्रकृतिपरवशा ये प्राणिनस्तेऽप्यहिंसा-
निभृतमुनिसमक्षं वैरिभावं त्यजन्ति! ।
गुरुचरणसमक्षं वल्लजानां विभावं
तमपि गुरुवरोऽसौ साग्रहं प्रास्तुतैव! ॥

41 अधिगतगुरुयात्राविस्तरे वल्लवासी
प्रथितमहिमतञ्जाभागधुक्[4]सर्हुडाख्यः ।
सविनयमुपसृत्यावेदयत्पञ्चनद्यां
गुरुवरकृतसाह्यं संस्मरन्धन्यवादान् ॥

1 Koviladi village
2 Kattupalli, Native place of sir Sivaswami Iyer
3 Vallam, Trichy Dt, 4 Sir Hood, Collector of Tanjore

42 सकरुणमुखकान्त्यां सद्गुरोर्लीनचित्तः
शतपथगुरुनाथप्रज्ञया चातिहृष्टः ।
बहुविषयविचारैर्व्यस्मरत्त्वं विदेश्यः
स्वयमवदत्-'इदं नो सङ्गतं विस्मरेयम्' ॥

43 दिशिदिशि कृतयात्रं ज्ञातविश्वेतिहासं
अनितरसुगमार्थज्ञानदीपायितस्त्वम् ।
'तदिदं; इह तदासीदित्यशेषाद्भुतानां
विशदविवृतिकोशं नौमि विश्वैकमित्रम् ॥

44 कथयतु - 'कथमोतप्रोतरीत्यैव हिन्दु-
प्रतिशतमतधर्मा [1]बालिदेशेऽनुषक्ताः ।'
कथयतु - 'कथमेतज्[2]जावके मुस्लिमेष्टे
स्वमतपरिचयेऽस्मत्संस्कृतिस्सा नु दृष्टा! ॥'

45 वहति महति शैलः कन्दरे चित्रजातं
करसरसिजसम्पन्नर्तकीनां विचित्रम् ।
'किमियमतिपुराणी धोरणी पल्लवानां?'
'उत मतिविभवाढ्या जैनशैली चितान्ने?[3] ॥'

46 'अभिनवविषया ये गीतशास्त्रानुषक्ताः
तिरुम[4]यशिखि[5]शैलक्षेत्रयोः प्रापिताः स्युः ।
लिपिपदमधिशैलं किंनु ते पल्लवेने'-
त्युदगमयदुदारां सद्गुरोस्तां समीक्षाम् ॥

47 द्रमिडमधुरकाव्येष्वात्तगन्धे महात्म-
न्युपसृतबुधसार्थैस्सार्धमालापशीले ।
प्रवयसि विकलोऽपि [6]स्वामिनाथार्यवर्ये
भृशमुपचितभक्तिर्वश्यवागास मुग्धः ॥

---

1. Bali
2. Java
3. Chittannavasal
4. Tirumayyam
5. Kudimiyanmalai
6. Sri U V Swaminatha Iyer

48 स्वयमतिचतुरोऽपि श्लेषभङ्ग्यार्थवादे
गुरुवरममृतांशुं नव्यकाव्यार्थसिन्धोः ।
द्रमिडमधुरभाषादेवतामेव मेने
पुलकितवपुरार्यः शुश्रुवान्वाग्विलासान् ॥

49 सततमभिनिवेशाच्चन्द्रमौलीश्वरं स-
द्गुरुवरकृतपूजावैभवं सन्दिदृक्षुः ।
सदसि मकरकण्ठीपूतगात्रस्समास्त
स्मृतपरगुरुरग्रेऽगस्त्यवत्सद्गुरोस्सः ॥

50 मधुकर इव यत्नात्प्रत्नदुष्प्रापगूढान्
प्रततविचयलब्धान्द्रामिडग्रन्थमुख्यान् ।
बहुविषयविमर्शैर्मुद्रयित्वा प्रकाश्यं
ह्यनयदयमिति प्रीतिपात्रं गुरोस्सः ॥

51 सपदि विदुषमेनं दाक्षिणात्यं कलानां
निधिमुदितमकार्षीत्स्वामिवर्यस्सभायाम् ।
पदमधिवहदुच्चैरिन्द्रसारस्वतं तत्
न खलु न गुरुपीठं ज्ञान दीपाय मुह्येत्! ॥

52 'महितबिरुदमेतत्क्षौमयुग्मं च पीठ-
प्रतिनिधिवररामस्वामिवर्यः प्रदद्यात्[1] ।
द्रमिडविबुधसङ्घे वार्षिकान्दोलने चे-
त्यमितकरुणया तं स्वामिवर्योऽभ्यनन्दत् ॥

53 अविरतमुपलब्धग्रन्थमुद्रापणं त्वं
तनुहि मदनुरोधान्मानितोऽसीति शश्वत् ।
सकरुणमनुशास्त्रे सार्वभौमाय नेत्रे
नम इति निजसाक्षिग्रन्थमाधात्स चार्यः ॥

1 Sir C P Ramaswami Iyer

54 तदनु धनिकवंश्यश्रेष्ठिदेशे वितन्वन्
सुचिरविजययात्रां पोल[1]तातालयस्थान् ।
बहुविधशुभकार्योद्यापकान्स्वामिपादः
कृतमुनिसवचातुर्मास्यदीक्षोऽन्वगृह्णात् ॥

55. कडियप्पट्टि-ती-चो[2] वंश्यमुत्तैयभक्तं
व्यधित बिरुदनाम्ना धर्मभूषं तपस्वी ।
यदयमभजताढ्यः पाटलेशं वितानैः
रजतरथविधानाच्चारुणाद्रीशमुक्तः ॥

56 यतिपतिमुपयातं स्वच्छबभ्राभवासः-
परिहितनिजगात्रं स्वर्णवर्णं ह्यपश्यन्! ।
तरुणतरणिदेवं 'तत्र मां प्रत्यगादि'-
त्युपहृतपरिबर्हाः श्रेणिशः श्रेष्ठिभक्ताः ॥

57 सविभवपुरवीथीनिष्क्रमान्ते पुरःस्थं
गुरुवरशिबिकासंवाहनोत्तंसितांसम् ।
कवयितगुरुकीर्तिं शुद्धवैनाकरीयं
प्रमुदितगुरुनाथो [3]रामनाथं ननन्द ॥

58 द्रमिडसुरगिरोरप्यद्वितीयो विपश्चित्
मणिरिव [4]खदिरेशः श्रेष्ठिदेशान्तरस्थः ।
प्रकटितगुरुभक्तिर्दर्शनाद्भाषणाच्च
प्रगुणितनिजभाग्यस्सद्गुरुं प्रागमंसीत् ॥

59 प्रशिथिलगतिबन्धे लोकयात्रानुबन्धे
कथमपि शतयत्नै श्शेवधिस्सत्कलानाम् ।
विबुधमणिसदृक्षै रक्षणीयेति भव्यं
ह्यशिषदमुमुदारस्सद्गुरुस्सोपहारम् ॥

---

1 Ilayattangudi
2 Kadiapatti Tee Cho Family
3 Vainakaram Ramanathan Chettiyar
4 Panditamani Kadiresa Chettiyar

60 अनुपदमुपगतोऽण्णामलैश्रेष्ठिवर्यः
सफलविजययात्रां भावितां पूज्यपादैः ।
सकृदपि कृतसेवान्नास्तिकानास्तिकश्री-
परिकलितविवेकांस्तन्वतीमभ्यनन्दत् ॥

61 "अनितरसुखसाधं लोभनीयं महार्घ
सुरभिसदुपदेशै र्लोकसौख्यं दधाना ।
जयति विजययात्रा सद्गुरोः कल्पवल्ली
जगति न सहते या भक्तिदुर्भिक्षलेशम् ॥

62 द्विजवरसमुदायं बाधते दैन्यरोगः
तदुपरि वरशुल्कं गण्डफेटायितं द्राक् ।
कथमपि दययेदं स्वामिपादैश्चिकित्स्यं
कथमितरविधौ ते दुस्तरं निस्तरेयुः? ॥

63 द्विजकुलमधुनाऽन्यापेक्षया मोहदग्धं
व्यतिषजति नितान्तं संस्कृतिः पश्चिमीया ।
तदनुगमनरीत्या मोहगर्ते प्लवन्ते
विषमविषविसर्पादन्धकूपायितेऽन्ये ॥

64 मनुजकुलविसर्पी व्याधिरेषोऽपनेयः
सपदि किमपि कृत्वा स्वामिनेत्यर्थिनं तम् ।
सविनयभरमग्रेऽण्णामलैश्रेष्ठिवर्य -
व्यसृजदुचितशिक्षस्सद्गुरुस्सानुमोदम् ॥

65 पृथुक [2]जनककूटे प्राक्तनाचार्यबृन्दा-
वनमभिगमनार्थं हेतवो नाभवन्के? ।
गुरुवरकृतचातुर्मास्यदीक्षापुरेऽस्मिन्
किमु न कृतवती सा क्रोधनं मुक्त भूयम्! ॥

1 Raja Sir Annamalai Chettiyar 2 Ilayathangudi

66 अभजत गुरुवर्यस्तत्र कैलासनाथं
अभजत किल नित्यं नित्यकल्याणदेवीम् ।
अभजत निजगुरूणां तत्समाधिस्थलं च
प्रतिदिनपरिचर्यापद्धिकेयं गुरोर्नः ॥

67 विलसितचतुरस्रं मन्दिरं गोमठं वा
मधुरमखिलमत्र ग्रामनिर्वाहदाक्ष्यात्? ।
प्रवणमति हृदास्ते सद्गुरोरत्र तस्मात्?
मधुरमिह नु सर्वं सद्गुरोर्वा कटाक्षात्? ॥

68 प्रतिशरदमुदारे मीनमासे त्वमायां
प्रथित महिमपात्रश्रीमहादेवसिद्धेः ।
दिवसमनु विभुं तं सम्यगाराधयन्तः
पृथुकजनककूटश्रेष्ठिभक्ता जयन्ति! ॥

69 'नियमविधिसभायां भाविनिर्वाचनादौ
सभिकपदमवाप्तुं प्रोद्यतानां जयोऽस्तु ।'
इति कतिचिदुपेतान्सत्यमूर्तिप्रमुख्यान्
निभृतमनुमतिं स्वां पूज्यपादोऽन्व गृह्णात् ॥

70 सततमवितथोक्तं विश्वविश्वासभाक्चेत्
भगवति च भवेत्सा भक्तिरन्यादृशी चेत् ।
किमपि किमपि कुर्वन्काङ्ग्रसीयोऽपरो वा
ध्रुवमनुपधि जेष्यत्येवमाशीर्मदीया ॥"

71 सशपथमिदमुक्त्वा पूज्यपादोऽनुमेने
नगरगमनमेषां; प्रत्यगाच्चान्यखेटम् ।
सततमभिनिविष्टाः स्वाश्रितानां हितार्थं
गुरुचरणसदृक्षा व्याप्नुवन्त्यान्तरिक्षम् ॥

72 अनुपदमभिजग्मुर्हिन्दुपत्राधिपोऽन्ये
गुरुचरणदिदृक्षाकारणा द्रायपुर्याम् ।
विवरणमकृताऽसौ गान्धिनेतृत्वसत्या-
ग्रहसमरगतानां राष्ट्रवार्ताशयानाम् ॥

73 "यदपि तदपि कृत्वा लाभ एकः प्रसाध्यः
इति न मनसि कार्यम्, धैर्य मेकं प्रधार्यम् ।
ऋतमपिहितमार्यैः पत्रिकाभिः प्रकाश्यम्;
न कथमपि विहेया देवसत्यैकनिष्ठा ॥"

74 गुरुवरकृतमेवंशिक्षणं शिष्यनेतृ-
प्रवरपरिधिरङ्ग[1]स्वामिनारायणाद्याः ।
शिरसि मनसि धृत्वा धन्यधन्या विरेजुः
स्वमपि निलयमीयुः स्वामिपादं स्मरन्तः ॥

75 अभिमुखकुलदेवज्योतिषेवात्तगन्धाः
कति कति महनीया हिन्दवो मुस्लिमाश्च ।
विगलितनिजभावा स्वामिपादे विलीनाः
इति कथयितुमद्धा! दुश्शकं विस्मयार्हम् ॥

76 समयपरिगृहीते सिन्धुसिष्णासया द्राक्
नृप[2]मठमभियास्यत्स्वामिपादप्रयाणे ।
कर[3]भकुटिजनास्तं मार्गमध्येऽन्वगच्छन्
यदुपवसतिमेकां रात्रिमध्यास्त धर्मी ॥

77 प्रवहणधृतिदण्डं सद्गुरोः कश्चिदूढ्वा
त्रिचतुरकिलमीटर्दूरमायान्मुसाल्मः ।
'क इति कुत इती'षत्स्मेरमुग्धाननेन
स्थितमतियतिनाऽसौ पृष्ट आचष्ट सर्वम् ॥

1 Rangaswami Iyangar, The Hindu 2 Rajamatham, Tanjore, Dt.
3 Karambakuti

78 स्वरचितकविताभिः पुष्पमालां सुवर्णं
फलमपि सितखण्डं स्वामिने प्रार्पयत्सः ।
सपदि सकरुणमस्मत्स्वामिपादोऽखिलं तत्
हुतवह इव होमद्रव्यमात्मन्युपैषीत् ॥

79 सविनयमिदमूचे-ऽ''ह्लाहुरूपं महान्तं
निभृतमिह दिदृक्षु र्दूरमेतावदायाम् ।
सकृदपि गुरुनाथे दृष्टमात्रे विवेकी
दलितनिखिलबन्धः श्रेससे भूयसेऽलम् ॥''

80 इति वदति सबाष्पं मुस्लिमोपासकेऽस्मिन्
गुरुवरकरुणां तां निर्निमिषा मठीयाः ।
ददृशुरतिशयात्ते; दृष्टयाथार्थ्यरूपं
व्यसृजदतिचिरात्तं धन्यमाचार्यवर्यः ॥

81 निवसति गुरुनाथे जम्बुकेशोपशल्ये
सविनयमुपयातो दर्शनार्थं बजाजः ।
तदनुगसुहृदासीत्स्व्यातराजाजिरेकः
सुमठबहिरलिन्दे; प्राविशन्नन्तरन्ये ॥

82 'किमिति' च महनीयस्वामिपृष्टोऽभ्यवादीत्
ननु शुचिरवधानादर्हति स्वामिसेवाम् ।
इति कृतमतिरासं श्रीमठालिन्दभागे
इति तमुदितवाचं सद्गुरुः प्रत्यबोधीत् ॥

83 'भवति मनसि शुद्धो यद्युपासापरो वा
सततमभिनिवेशात्सन्निधिं सेवतां मे ।
व्यथयतु मनसा मा बाह्यशुद्धिं विचिन्त्य
व्रतमुचितमुपास्तां शुद्ध राजाजिवत्सः ॥

84 अशिषदखिलपूज्यः स्वामिपादस्तमेवं
तदनु सुचिरमाधाद्भाषणं राष्ट्ररङ्गे ।
खदरनुगतबोधे गान्धिनेतृत्वकार्ये
दिशि विदिशि च सिद्धे भारतात्मप्रबोधे ॥

85 अथ कतिपयमासान्श्रोछिखेटान्प्रपूय
प्रथितविजययात्रां दक्षिणार्काडुपान्ते ।
ग्रहपतिरिव साक्षात्सद्गुरुः स्वामिपाल्ये[2]
त्वरभत करुणांशुप्रोल्लसत्सज्जनाब्जे ॥

86 जनपदमिदमासीत्तञ्जपुर्याधिपत्ये
चिरमुपचितबन्धं काञ्चिकामाक्षिदेव्या ।
अत इदमधिपालाः 'कञ्चि' शब्दं स्वनाम्ना
सहयुतमुपयुज्य प्रार्जयन्ति प्रसिद्धिम् ॥

87 चिरपरिचयदार्ढ्यं कामकोटीमठेन
प्रतिपदमुपदाभिः स्वामिषा[3]ल्याभिजाताः ।
नृपतिबिरुदभाजोऽवर्धयन्यत्सहायैः
मठमिदमगमत्प्राक् कुंभकोणं हि काञ्च्याः ॥

88 निजकृतसहयोगैस्तञ्जपुर्यां[4]प्रतापः
तदनु च घटकोणे श्रीडबीर्पन्तमन्त्री ।
तदवसरमठेशं हेमका[5]माक्षिकां च
प्रकृतिपरवशौ तौ वर्धयामासतुस्तौ ॥

89 निखिलमिद मासीत्प्राक्शताब्दीद्वयाच्चेत्
तदुपरि किल सर्वे स्तंत्रजाता इदानीम् ।
गजतुरगगवोष्ट्रं पारिर्हं विधाय-
प्रगुणितमुपचारं स्वामिने कुर्वते स्म ॥

90 त्रिचतुरशरदन्तेऽवग्रहाऽऽधातनिद्रां
विघटयदतिमात्रं वर्षमासीत्तदानीम् ।
कृषिफलतृणवृद्धया चोलसंस्थानमृद्धं
गुरुवरकरुणायास्सिद्धदृष्टान्तमूचे ॥

1 South Arcot Dt., 2 Udayarpalayam, 3 Udayarpalayam,
4 Pratapasımharaya, 5 Bangarukamakshu

91 कतिपयदिवसान्ते प्रस्थितः प्रापदारात्
[1]उपदहरपुरं तत्काङ्क्षमन्नारगारम् ।
यतिपतिरतनिष्ट व्यासपूजां तु तत्र
समयविहितचातुर्मास्यदीक्षो व्यभासीत् ॥

92 जगति रचितसेवाः पञ्चषा धर्मधीराः
तदनुसरणमात्रात्केचिदासेव्यधर्माः ।
रघुपतिरिति पूर्वं धर्ममूर्तिः प्रतीतः
क इह गुरुवरान्नो धर्ममूर्तिः परोऽस्ति ॥

93 चरति नियतधर्मानादिशत्याश्रितांश्च
स्वयमपि चरितुं तानाप्त एवानुकूलः ।
प्रतिशरदमतानीदात्मना शक्तिरूपः
भुवनगुरुवरोऽसौ शक्तिपूजां नवाहे ॥

94 अनुकृतनिजपूर्व[2]पाटलक्षेत्रयात्रा-
समयविततदेवीपूजनं स्वामिपादम् ।
क्षयमुपसरताऽपि प्रेक्ष्य तद्वत्सरेणा-
ऽऽद्रियत च परमार्थह्लादिनेवाक्षयत्वम् ॥

95 परिणतवयस स्वं बाल्यवात्सल्यपात्र
द्रमिड[3]वचसि बद्धां सद्गुरुस्तोत्रमालाम् ।
सविनयमुपहृत्य स्वैरमासेवमानां
सकरुणमचला[4] म्बामन्वगृह्णात्तपस्वी ॥

96 तदनु सुचिरकालाद्भारते [5]वेदपुर्यां
अधिकृत निजराज्यात्क्लेशदेश्यान्विनीतान् ।
विशदविमलभक्तीन्कामकोटीमठेशो -
ष्वधित विजययात्राप्रीतचित्तान्यतीन्द्र ॥

1 Chidambaram, 2 Thiruppadiripuliyur, 3 Tamil Language
4 Achalambal 5 Pondicherry

97 मधुर पटविताना रम्यरम्भाञ्चिताग्राः
सकल नगरवीथ्यस्तोरणालङ्कृताश्च ।
क्रमुकखदिर तालैर्नालिकेरैश्च बद्धैः
पञ्चातिगृहमवदाताश्वशाला विरेजुः ॥

98 निजकरधृतवाद्याः श्रेणिशस्सैनिकाद्याः
प्रमुखनगरनालास्सद्गुरोः स्वागताय ।
व्यपगतमतभेदं सज्जमानास्तानीं
धनपतिगृहशोभां वेदपुर्यां वितेनुः ॥

99 प्रतिदिनमनुवेलं चन्द्रमामौलीश्वरस्य
त्रिभुवन जनमातुः स्वैरसन्दर्शनादि ।
व्यधिषत मठभक्ताः वेदपुर्यां निवेशे
मनसिच कृतकृत्यंमन्यमानाः प्रसेदुः ॥

100 भुवनगुरुवरोऽसौ दाहिते प्राचि दुष्टैः
रथमभिनवमेकं निर्मिमासून्प्रमुख्यान् ।
बहुधनभरणीयं कार्यमावामिच्छी
मुखधनसहयोगैसत्यागराजालयस्थान् ॥

101 विपुलविभवसाध्ये कश्चिदस्मिन्पुरोद्याः
प्रमुखपदमथत्त स्वीयसर्वस्वदानैः ।
यतिपदमपि पश्चात्सुब्बराय्योऽन्वधाव-
द्गुरुवरकरुणायाः पात्रमासीच्च विप्रः ।

102 श्रुतिपुरगमनात्प्रागष्टपञ्चाशपीठे
पतिगुरुवरसिद्धिक्षेत्रमासीविमृग्यम् ।
तद्धोपि विदितमासीदुत्तरे माम्बलेऽस्ती-
त्युपगतमठपत्रैरुद्यमात्सद्गुरोर्नः ॥

---

1 Sri Subbaraya Iyer (Vadhyar) of Ozhulur
2 58th Acharyaswami of Kanchi Kamakoti Peetha
3 Vadamambalam, a village near Sathanur Railway Station

103 अथ शुभसमयेऽत्र श्रीमदाचार्यवर्यः
सह परिकरबन्धैः स्थापयामास बॅृन्दाम् ।
तदनु विजययात्रास्वादधे दर्शनार्थ
मन इति कियदेतत्कौतुकं त्यागितायाः! ॥

104 अथ परिसरमार्गग्रामदेशान्व्यतीत्य
क्रमश इव च कोशान्कश्चिदानन्दमार्गम् ।
इह जनपद मेतान्मार्गसंज्ञं त्वयासीत्
सकलजनहितैषी सार्वभौमो गुरूणाम् ॥

105 [2]सुरगवि शिवलिङ्गे चित्रबन्धप्रणेता
परमतपथिकोऽपि स्वामिसन्दर्शनोत्कः ।
मठपदमुपयातो मुस्लिमाढ्यस्तदानीं
कथमपि न विकृष्टा कान्तलोहान्नु सूचिः! ॥

106 "क्रमिकगतमिद मे संस्कृते काव्यकृत्त्वं
समजनि सुदिने मे स्वामिनां दर्शनेन ।"
गुरुरिति हि वदन्तं विस्मितस्सस्मितश्च
"प्रसरतु चिरमेषा रीति" रित्यन्वशाच्च ॥

107 प्रणयपरभवानीसङ्गमे सङ्गमेशं
निरतिशयतपोधिस्सेवते स्मापराह्ने ।
झटिति पुरमयासीत्पश्चिमे पर्वताग्रे
यदधितटमुपेता भाति कावेरिका सा ॥

108 गुरुवरचरणोद्यन्मार्दवे शङ्कितेव
प्रखरशिखरशैलप्रस्तराऽपि प्रशान्ता ।
गुरुवरकरुणाया· पूरमात्मन्यमान्ती
प्रतिफलदुदपूरा दियुतेऽधित्यकापूः ॥

1 Erode Twon 2 Sanskrit language 3 Mettur

109 तदधिवसदाढ्यै स्सेतुबन्धैकदीक्षैः
भटभृतकसदृक्षैर्वास्तुविद्याप्तैमर्षैः ।
अहमहमिकया श्रीस्वामिपादोऽभ्युपेये
सुवितत इव धर्मे चातकैरम्बुवाहः ॥

110 कथमुरुजवखेलं निष्पतन्तीव गौरी
नयनपथ उपास्या स्यान्महीशूरसिन्धुः[1] ।
श्रम इति कुत आसीत्सद्गुरोस्तु प्रसादः
प्रकृतिमधुरतायै रोचमानस्य तत्र! ॥

111 तदनु झटिति शूलूरध्वना सात्विकानां
श्रमिकजनपदानामुत्तमं गोपुरं तत् ।
गुरुवरकृतयात्रापात्रतां प्राप; सद्यः
समजनि गुणलुब्धश्रीनिवासाय पात्रम् ॥

112 विविधगुणविशेषै रादराद्विस्तृतैस्ते
सुविहितपटवेमव्यापृता स्साधवोऽत्र ।
न तु कपटकटाहं जानते मात्रयाऽपि
स्वरसकृषिफलाः को [2]यम्बुदूराभिजाताः ॥

113 निजपुरमुपयातं सद्गुरुं स्वागताद्यैः
उपचरणविधानैर्नागरा वावदूकाः ।
प्रमुखवणिगधीशाश्शासकीयास्सवंश्याः
सविनयमुपजग्मुः श्रृङ्गगिर्याश्रमस्थम् ॥

114 सकुतुकमुपजाते पट्टणाभिक्रमे द्राक्
सुचिरमधिकृता श्रीचन्द्रमौलीशपूजा ।
सुविशदमपराह्णे स्वामिना प्रस्तुतोऽभूत्
हरिहरगतभेदाभावरूपो विचारः ॥

1 Kaveri river 2 Coimbatore city

115 सपदि गुरुतपस्यासाधितादृष्टिपातात्
बहुदिनमनुभूतो घर्म आसीत्प्रशान्तः ।
इति नगरजनानां धन्यवादैरुदीतो
घन इव गुरुरागाच्छारदानां वन तत् ॥

116 आद्यश्रीशङ्कराद्यैस्सुघटितसुषमेतोत्तरत्ने प्रगाढान्
व्यङ्ग्यार्थान्प्रस्रवन्तीस्सरसपदगतिप्रक्रियाः श्रावयन्तम् ।
अद्वैतग्रन्थिबन्धाननुपमरसयुक्त्या सहास्यार्थवादं
व्याख्यान्तं कामकोटीगुरुवरमभिज्ञा न के वा स्तुवन्ति! ॥

इति श्रीचन्द्रशेखरेन्द्रसरस्वतीविजयमहाकाव्ये पञ्चमस्सर्ग.

# षष्ठः सर्गः

1 अथौषधीनां निलयं महान्तं समुद्रशैलोभयपार्श्वदुर्गम् ।
विवेश चेराख्यजनप्रदेशं जगद्गुरुर्जानपदप्रयाणे ॥

2 चिराद्दुरापस्सहसा विदेश्यैस्तथाऽभिशापादिव भार्गवस्य ।
कलाविदां केन्द्रमुदग्रमास्ते विलासिनां योऽप्यभिरामधाम ॥

3 मनोज्ञमभ्यन्तरसङ्ग्वासं यदीयसौधोष्विव लब्धुकामाः ।
उपात्तनम्बूदिरिभट्टवेषाश्चरन्ति गन्धर्वगणाः पृथिव्याम् ॥

4 मठान्तरेष्वादृतमन्द्रतारस्वरानुपांशु प्रतिवीजयन्तः ।
उपासते शाखिगणास्सगन्धानिवात्र ऋक्शाखिगणान्मरुद्भिः ॥

5 व्रतीव भास्वानुदयेऽप्युदारो यदीयसौधान्न कुतोऽपि युञ्जन् ।
निवेदयत्येव करोपरोधं सकैतवं निष्कुटशाखिमूलम् ॥

6 विलक्षणाचारविचारधारास्सर्वत्र सन्दानितनैजभावाः ।
जना हि जाग्रत्यकुतोभयास्ते नचापि ते यत्र निकृष्टभावाः ॥

7 कुतोऽप्यदूरे किल शैलराजिस्ततोऽप्यदूरे किल निम्नदेश. ।
प्रतीपयोरत्र समानयोगात्तदेतदाहुर्मलयालराज्यम् ॥

8 यदीयमभ्यर्णवहन्नदाग्रं जगद्गुरुः कालटिमग्रहारम् ।
पुरा प्रसिध्दादिमशङ्करार्य. स्वजन्मदेशं चकमेऽद्वितीयम् ॥

9 यदंशजा२च्छ्रीनिलयाग्रहारान्मठे तथाऽद्वैतसभासु कश्चित् ।
महागुरोर्मानसनाकलोके विशिष्टमध्यास्त पदं विप३श्चित् ॥

10 पुरश्शिखांस्तन्त्रिगणान्विजिग्युः खगोलशास्त्रे गणिते च दक्षा. ।
जयन्ति तान्यत्र च शान्तिदुर्गामठस्थिताःपूजकयायजूकाः ॥

1 Curse of Parasurama was like that
2 Tirunilayi village, Palakkad Dt Kerala State
3 Sri Matham Asthanavidvan Sri T V Lakshminarayana Sastrigal

11 प्रसिध्दलीला१शुक भट्ट२पादावतीत्य पून्दानसमांश्च भक्तान् ।
विभावयन्नात्मजनिर्विशेषं स वासुदेवोऽत्र हि सन्निधत्ते ॥

12 वने चरन्तं प्रणयात्तु रामं फलैर्बदर्यश्शिबरी ह्युपास्त ।
वनं तदेतच्छबरीमहाद्रौ द्वयं च तत्केरलदेशसीम्नि ॥

13 पुरा प्रतीच्छन्निह रामभद्रः विमोचनं भार्गवशापदोषात् ।
शिलासु गङ्गोत्समधाच्छराग्रे स्थलं तदास्ते 4शरगङ्गयोच्चम् ॥

14 समात्तमासावधियात्रया जनाञ्जगद्गुरुः शारदवन्युपान्ते ।
तथाऽनुजग्राह च सोपहारान् विनीतकोल्ल५ङ्कटराजवंश्यान् ॥

15 महागुरोः स्वागतपादपूजामहार्घभिक्षादिषु कार्यका६राः ।
प्रसिद्धनारा७यणनामधेयो जटाप्रपाठी च धुरा निरूहु ॥

16 यदैव भङ्गिनी मधुरोपदेशं स्फुटोज्वलत्कैरलवाग्विलासम् ।
व्यधात्सहास्यं गुरुसार्वभौमस्तदा सदेश्य पुरजैस्तु मेने ॥

17 चतुर्षु मासेषु यतेन्द्रियस्सन्व्यधत्त च व्यासमहर्षिपूजाम् ।
गुरूद्वह. कञ्चिकुटे८ महस्वान् प्रचारयामास महोपदेशान् ॥

18 सभक्तगोष्ठीजनमग्निपुत्रं सु९कीर्तिपद्यै र्भजमानमुच्चैः ।
गुरुस्तदाऽऽह्वद्विरुदेन१० कीर्ति-मणिंच कृ११ष्णाभिधवावदूकम् ॥

19 शिरोविधार्य बहुमानमार्य गुरोस्सकाश्मीरजसाल्वमाप्य ।
कृतार्थमात्मानममन्यतोच्चैरवन्दताशेषजगद्गुरुं तम् ॥

---

1 Famous devotee and poet of Kerala
2 Narayanabhatatiri whose devotional poerty Narayaniyam is famous
3 Poondanam Swamiyar a devotee of Sri Krishna at Guruvayur
4 Saraganga situated at Para, Palakkad Dt
5 Kollangode near Palakkad
6 Swaminatha Kankkar of Chattappuram, Palakkad
7 Narayana (Nana) Jatavallabhar, Govindarayapuram, Palakkad
8 Kanjikode, Mid-Forest village in the Coimbatore-Palakkad Highway
9 Tiruppugazh (in Tamil)
10 Tiruppugazh Mani a title given by H H, Mahaperiaval to-
11 Sri T M Krishnasawami Iyer, Madras High Court

20 ततस्तदा काड्ग्रसलक्ष्यकार्यप्रचारमुल्लिख्य समात्तयात्रः ।
इयाय गान्धिर्द्रमिडेषु मद्रं गुरुं प्रतीयाय च दर्शनार्थम् ॥

21 स नेल्लिशेर्याख्य महाग्रहारे कृतोपवेशं व्रतिनं ददर्श ।
पिशङ्गवस्त्राञ्चितशुभ्रगात्रं स्थलासने गोष्ठभुवि प्रसन्नम् ॥

22 वपुर्यदीयं धयतोऽक्षिपाल्या क्षणेन तेजस्वि निरन्तरायम् ।
बभूव गान्धेस्सकलेन्द्रियाणां प्रवृत्तिरेकत्र समाहितेव ॥

23 परस्परालापमथारभेतां परस्परज्ञातपरस्परार्थौ ।
गुरूद्वहस्संस्कृतवाचि गान्धिः स्वदेशहिन्द्यामपि कल्पमानौ ॥

24 जनस्य विश्वेश्वर भक्तियोगं तयेश्वरानुग्रहमादरार्हम् ।
स्वराज्यसिद्धेरिह भद्रपीठं वदन्नयं गान्धिमहान्मतो नः ॥

25 वदत्यहिंसा च सदाऽवधेयां - इहाऽपि नास्त्येव विकल्पलेशः ।
परंतु, तत्र स्मरणीयमेतद्विधा हि बाह्यान्तरभेदतस्सा ॥

26 द्वयेऽपि चेदस्ति सदाऽवधानं धिनोति निस्संशयमेतदस्मान् ।
करोतु गान्धिर्यदिहास्ति युक्तं यदेष आत्मार्थविदा वरेण्यः ॥

27 इति स्म लोकैकगुरुस्तदानीं प्रभाषते गान्धिमुदारभावम् ।
महात्मनां बोधनधोरणी सा यदीयते व्यङ्ग्यतयाऽभिजाते ॥

28 "जगद्गुरोर्दर्शनमात्रतोऽहं कृतार्थतामाप; यथाऽवकाशम् ।
स्मरञ्जगत्स्वामिवरस्य भावं तथा यतिष्ये करणेन साध्ये ॥"

29 इतीरयन्विस्मृतभोजनोऽसौ गुरूद्वहालापमियेष भोज्यम् ।
अतीतघण्टावधिभाषणो नो बुबोध राजाजिविबोधनं सः ॥

30 गुरूत्तमश्शारदकाननं तत्प्रदक्षिणीकृत्य ततः क्रमेण ।
अगान्महाक्षेत्रमसीमलीलाविभावधामायितवासुदेवम् ॥

31 पुराऽकरोदेव गुरोश्च वायोरनुग्रहं तच्छुभनामधाम्नि ।
जगद्गुरुर्यः प्रथमोऽभवत्तं ददर्श कृष्णं जगतीगुरुर्नः ॥

32 तदा विशेषात्पयसाऽभिषिक्तं ह्यलङ्कृताङ्गं गुरुवायुनाथम् ।
उपास्थितानन्दघनं मुकुन्दं सहस्रश स्साधुजनावनं तम् ॥

33 ततः परेऽह्नि प्रयतः प्रपेदे त्रिशूरपुर्यां त्रिपुराम्बिकेशम् ।
उदीच्यनाथं गुरुनाथ आरात्तुनाथ रुद्रत्रिशतीसनाथम् ॥

1 Vadakkunathar

34 उपासदच्छाङ्करसन्निधानद्वयं तदध्यक्षवरैः प्रतीष्टः ।
तदोपलब्धाद्गुरुतालकोशाच्चिकाय चाचार्यचरित्रलेशान् ॥

35 समूह[1]गुर्वाश्रममाणवानां समेधयन्नुत्सवमाशिषा द्राक् ।
किरा[2]ङ्गघाटं प्रययौ पुनानो गुरुस्स तीर्थामुख[3]पत्तनान्तः ॥

36 तत्रत्यराजाधिकृतैः कृतार्थं - उपासिताम्बंच यतीन्द्रमीड्यम् ।
उपाचरन्स्वागतवाचस्ते प्रसिद्धगो[4]श्रीक्षितिपालवंश्याः ॥

37 तदर्थनां सार्थयता च पूर्णत्र[5]यीशमासेव्य कलालयस्थाः ।
अधीतिनस्संस्कृतवाचि धर्मास्तिमामशिष्यन्त च मासमेकम् ॥

38 जगद्गुरुस्सेवितवैक[6]नाथस्समासदत्कोट्टयमाल[7]सिन्धुम् ।
ततोऽपि मङ्गोम्बुपुरं तदानीं - अमानयच्छङ्करसञ्जयन्तीम् ॥

39 क्रमेण कोल्ला[8]ख्यपुरं समायाद्धव्रीव योगैरणिमादिसिद्धिम् ।
दिनानि पञ्चाधिवसंश्च तत्र प्रचारयामास सनातनार्थान् ॥

40 निजाख्यया तत्र निरूढमूलां सवेदशास्त्रादिसमर्थबालाम् ।
मठाधिपाप्यायितपाठशालां मुमोद पश्यन्निव कल्पवल्लीम् ॥

41 प्रदेशराज्यद्वयशासकानां नियोगतोऽपोहितसीमशुल्कम् ।
सुशक्यसंस्थानमठोपवेशं गुरोरभूत्केरलदिक्प्रयाणम् ॥

42 ततः पथाऽर्यलियर[9]-रक्तसाल[10]-प्रवाह[11]पुरादिजना लयानाम् ।
गुरूद्वहः प्राप महत्पदं तत् कुदा[12]लनाथस्य कटाक्षपात्रम् ॥

43 सनिर्झरोद्गारमहाद्रिवीक्षा जटाभरोद्वाहितगाङ्गपूरम् ।
तपस्विनं स्थाणुमुदीर्णरूपं जनाननुस्मारयतीह नित्यम् ॥

44 महांसि तन्निर्झरतां प्रपद्य स्रोतस्विनीमध्यगतं गिरिं तम् ।
तपोऽभियोगादिव सन्तपन्तं शिवं प्रषिञ्चन्त्यभिषेकतोषम् ॥

---

1 Samuha Madam, 2 Kirangad, 3 Thuraimugapattinam
4 Cochi, once the capital city of the state with the same name.
5 Presiding deity of Tiruppunithura, 6 Vaikkam
7 Alappuzha, 8 Kollam, 9 Aryankavu, 10 Sengottah
11 Punalur, 12 Kuttalam

45 कुतोऽपि रस्यः पनसस्य गन्धः कुतोऽपि गन्धो गिरिचम्पकानाम्।
कुतोऽपि गन्धः कुटजस्य वाति क्षिताविवाचार्यतपःफलानाम् ॥

46 यथावदासादितशालि[1]वाटीविराजमानस्थलतीर्थमुख्यः ।
जगद्गुरुर्नित्यतपःप्रपूतोऽप्यगाहताचार इतीव तीर्थान् ॥

47 स रामबाणस्य कियान्प्रभावः कियन्नु तीर्थस्य च वैभवं तत् ।
उभे समं तोलयतो महत्त्वं जगद्विजानातु जगद्गुरोर्नः ॥

48 प्रभाविताशेषजनौघकन्याकुमारिकासन्निधिमीयुषोऽस्य ।
गुरोः पदे दीर्घकरः प्रपेदे ध्रुवं विलम्बं नियमेऽसहिष्णुः ॥

49 चिरेण संसक्ततपःप्रतापप्रभासुरोद्यद्गुरुसन्निधाने ।
भियेव भास्वान्कुतपाभिलाषी व्यलीयतान्तर्जलधेस्तदानीम् ॥

50 विनिर्मिमाणो रविरेष शिल्पी सु-तारहारान्रजनीप्रियायै ।
निनीषतीवार्द्रयितुं जलान्तः प्रतप्तमासायमिहांशुहेम ॥

51 यतिं प्रयास्यन्तमुदन्वदन्तः पिशङ्गवर्णाम्बरमंशुमन्तम् ।
विदेहमुक्तेरिव सन्निकृष्टं अवन्दताराद्गुरुसार्वभौमः ॥

52 दिनद्वयं तत्र निषेवमाणः कुर[2]कुमारिकां तां च महोदधिं च ।
ततोऽप्ययासीत्तिरुवेङ्कं द्राक् पवित्रितं वेगवतीविसारैः ॥

53 'द्विजो[3]विजीयादिति' तालपत्रे विलिख्य वादे श्रमणैस्सशापम् ।
जलप्लुतं तत्खलु वेगवत्यां ततोऽन्यपद्येन तटे व्यघारि ॥

54 इतीह शैवाग्रजसाक्षितालप्रसिद्धनामा स किलाग्रहारः ।
महागुरुव्यासमहर्षिपूजाविभावितोऽभूद्विभवेन[4] योगात् ॥

---

1 Tirunelveli 2 Kanyakumari
3 வாழ்க அந்தணர் வானவர் ஆனினம்
4 Name of the year; prosperity

55. तदामहीशूर[1] नृपः स्वकीयं गजोपहारं गुरवे समृद्धम् ।
प्रकल्पयामास तपस्विवर्गः प्रशासकायेव तपःफलौघम् ॥

56 कृतोपचाराय च गीतगोष्ठ्या स सुब्ब[2]रामाय कलाविदे द्राक् ।
दुकूलवासोऽदित माननार्थं सदाशिवश्चानघशिष्यनेत्रे ॥

57 तपोनिधिं तं मधुरोपविष्टं सुनीतिवित्साप्रु[3] महाशयस्सः ।
प्रयागतो दर्शितभक्तिरारादुपासदद्दर्शनभाषणोत्कः ॥

58 प्रकल्प्य दोषं नियमातिपातं नियन्त्रिते नेतृगणे विदेश्यैः ।
अभूदिहानाथजनेष्वशान्तिः प्रतीपयोगादिव दुर्ग्रहाणाम् ॥

59 योगं समावेश्य तदा हि साब्रुर्देशीयनानामतवादिनां प्राक् ।
प्रशासकीयं सहयोगमैच्छज्जनेषु शान्तिंम्सुखोपपादम् ॥

60 निवेदितो लोकगुरुस्तदैवं प्रयासमाशास्यममंस्त साप्रोः ।
शुभाय लोकस्य सदा रतानां मनो हि जागर्ति मनस्विवश्यम् ॥

61 शुभाशिषा तेजबहादुरं तं विसृज्य विद्यानिधिरप्ययासीत् ।
तमम्बिकाना[4] यकमग्रहारं विधित्सुरम्बानवरात्रपूजाम् ॥

62 उपासमानो नवरात्रमम्बां उपासितस्सद्गुरुरादरेण ।
तत्रत्यभूनायकराम[5] नाम्ना व्यराजताऽऽपञ्चदशाहमीडय. ॥

63 उपायनं सद्गुरवेऽल्प[6]शैले भुवोंऽशमेकात्रिशतप्रमाणम् ।
समर्पयामास स रामनाथः त्रिविक्रमायेव वलिर्महात्मा ॥

64 ततो व्यतीतातिमहो[7]पलाब्ध्वा यतीन्द्र आयात्फल[8]नीशशैलम् ।
समर्चयन् शक्तिधरं विरेजे महाभिषेकादिमहोपचारैः ॥

65 कृपाभरार्द्रस्वकटाक्षवृष्ट्या नितान्तमाप्यायितसाधुसस्यम् ।
जनाधिवासाः कति वा प्रतीयुः पदे पदे सद्गुरुमम्बुवाहम् ॥

---

1 Mysore, 2 Sangita vidvan Sri Mazhavarayannantal Subbarama Bhagavatar 3 Tej Bahadur Sapru, Justice of Allahabad High Court 4 Ammanayakanur, Madurai Dt 5 Ammanayakanur Jamindar Ramaswami Naicker 6 Sirumalai 7 Dindigul 8 Palani Hill

66 अतीत्य भागानमरावतीप्राग्गतानियाय त्रिशिरः[1] पुरीं द्राक् ।
दिनान्तरे बोधितवेदधर्मो जगद्गुरुर्मासमुवास तत्र ॥

67 ततः परं शोभनदक्षिणा[2]र्काट्पथा गुरोर्या विजयार्थयात्रा ।
पचेलिमं तन्निजपुण्यसिद्धं फलं जनानामुपसन्नमासान् ॥

68 कषायवासा स्स हि निर्मलस्सन्यदाऽकरोद्व्यासमहर्षिपूजाम् ।
जगद्गुरुस्सैक[3]तखेटकान्तस्तदाऽभवद्वत्सर एव शुक्लः ॥

69 तत्रैव मासद्वयसन्निधाने शरीरमात्रं ज्वरपात्रमासीत् ।
कुतो न जाने गुरुदेवतायाः न भेषजं प्रेष्ठमृते तुलस्याः ॥

70 मठीयशिष्या नितरां विदूनाः प्रसान्त्वयन्ते स्म चिकित्सिताप्त्यै ।
प्रसिद्ध[5]वैद्यौ प्रपदोपसन्नौ न शेकतुः कर्तुमपीषदिष्टम् ॥

71 तथापि दैवात्समवापि देहे गुरोः क्रमोल्लाघतयाऽवलम्बः ।
यथापुरं बद्धमना व्यतानीत्स्वजन्मविद्यास्थलयोस्स यात्राम् ॥

72 तदा स्वभूमिक्रयलब्धसर्वस्वदानमिच्छन्गुरुसन्निधाने ।
निवारितोऽप्यादरभक्तिपूर्वं न्यवेदयत्तण्डलमेषपालः ॥

73 प्रगाढभक्तिं तमवेक्ष्य साक्षाज्जगद्गुरुस्सादरमन्वमंस्त ।
ततोऽप्यशाच्छासकवर्गमारात्प्रदातुमस्मै कृषिभूमिमिष्टाम् ॥

74 दिवानिशं लोकहितङ्करिष्णुः जगद्गुरुः किंनु विराममृच्छेत् ?।
ततोऽप्यदूरादरुणाच[6]लेशं गुरुः प्रतस्थे तमुपासमानः ॥

---

1 Tiruchirappalli
2 South Arcot Dt.
3 மணலூர்பேட்டை
4 Name of the year, white
5 Palakkad Doctor Sri Sankaranarayana Iyer and Vaidyavisarada Sri K.G Natesa sastri
6 Tiruvannamalai

75 शिवात्परं दैवतमुज्झिहानं शिवामपीड्यामनमन्तमार्या ।
शिवस्य वामार्धवपुर्भवन्ती शुशोध पारम्यपरं हि भक्तम् ॥

76 तमर्धनारीशमुपास्त भृङ्गी चिराय सापीतकुचाम्बमत्र ।
अनन्यभावेन हि वन्दमानश्शिवत्वमायादरुणाद्रिवासी ॥

77 प्रभूतरोचिर्मयतां शिवस्य प्रकाशयत्कार्तिकदीप एषः ।
अधित्यकायामरुणाचलस्य प्रभासते भक्तवरैः प्रगीतः ॥

78 वराहहंसाकृतिधारिणोरप्युपेन्द्रपद्मोद्भवयोरशक्यम् ।
यदीयविभ्वाकृतिदर्शनं चेत्कथं स लक्ष्यो महतो महीयान् ॥

79 पुरा स भक्तोऽरुणगिरि[1]र्यदीशः-स पौर[2]पिल्लै-स च काड[3]सिद्धः ।
स चानुदृष्टो रमणो[4]महर्षिः स्वचित्-तपस्सिद्धिमवापुरत्र ॥

80 इतीदृशं वैभवविस्तराढ्यं कदा नु धामानुजिघृक्षतीति! ।
सदोन्मुखांश्चातकवृत्तिजुष्टाञ्जगद्गुरुस्सन्निधिनाऽन्वगृह्णात् ॥

81 न केवलं मासमुवास तस्मिन्न केवलं साधु शिवावुपास्त ।
न केवलं चाद्रिपरिक्रमोत्कस्सर्वानुकार्योऽपि गुरुर्गरीयान् ॥

82 ततो हरोरा[5]स्यगिरिप्रदेशं प्रपद्य चेङ्गोपपथाऽनुसेलम् ।
सुदूरमालोकयता प्रकृत्या. मुदश्च सीमा गुरुणा न दृष्टा ॥

83 कवेरजाप्रस्तुतपानपुष्टां हरोरभूप्राकृतिकीश्रियं ताम् ।
योगी प्रपश्यन्ननिमेषचक्षुः क्षण प्रपेदे ननु विश्वभावम् ॥

---

1. அருணகிரிநாதர்
2. பட்டணத்துப்பிள்ளை
3. இடககாட்டு சித்தர்
4. ஸ்ரீரமண மஹரிஷி
5. ஹரூா-சேலம்

84 सलीलघोषं समभिद्रवन्त्याः कवेरजायाः प्रथमाभिषङ्गम् ।
प्रकाशयंस्तीर्थगि१रिप्रपातः स - सानुतापं गुरुणा सिषेवे ॥

85 अशेषमार्काड्गतेषु खेटेष्वखण्डयात्रामनुवर्तमानः ।
व्यधाद्गुरुर्व्या समहर्षिपूजां व्रतं च पुष्या२चलगोप्यखेटे ॥

86 मासद्वयं तत्र मठस्य रक्षा, वनान्तरागन्तुजनस्य सौख्यम् ।
इति द्वयं ग्रामणि-शासकानां चकार साक्ष्यं गुरुभक्तिदार्ढ्ये ॥

87 तदा कुतोऽप्यग्निपरीतकोष्ठान्मठीयदन्ती ह्रदमाप दूरे ।
गुरुं समीक्ष्यैव शनैस्समायाद्विचित्रमेतन्महनीयवृत्तम् ॥

88 ततस्समीपेऽड्यप्प३लाख्यो द्विजन्मनामावसथोऽतिरम्य' ।
यमेव मेने जगतीगुरु' स्वं निधानमद्वैतिकथास्वभूतम् ॥

89 यदत्र मान्योऽप्पयदीक्षितः प्राक्चतुश्शताब्दयाः प्रवरो विपश्चित् ।
शताधिकग्रन्थवरप्रणोता महान् शिवाद्वैतिवरो न्यवात्सीत् ॥

90 प्रथा भरन्तो दिशि दक्षिणस्यां तदीयवंश्या वयमित्यनेके ।
तदीयशिष्या वयमित्यनूक्त्या यशो लभन्ते यदनुस्मृतीद्धा. ॥

91 महागुरु स्तत्कृतशास्त्रमेकं सभाष्यमध्येतुमुपादिशत्तान् ।
अथादसीयं जन्मदिनं सभक्ति सवान्वितं मानयितुं समाख्यत् ॥

92 ततः परं नैजकटाक्षपात प्रपावितग्रामटिका व्यतीत्य ।
क्रमेण चेङ्गल्पट-पक्षितीर्थे गुरूत्तमेनादरतः प्रतीये ॥

93 तदा मुदा वेदगिरीशमम्बां यथावदाराध्य तपोधनाढ्य. ।
अन्वग्रहीत्साधु महाद्जनानां समाजमासादितभक्तिपोषम् ॥

94 समार्ज्यतां मोक्षफलाय सम्पच्चतुष्टयं साधुजनेन नित्यम् ।
जनावनं तत्पद मात्मनीनं प्रकाश्य कर्तव्यमपीत्यवादीत् ॥

---

1. தீர்த்தகிரி நீர்வீழ்ச்சி 2. பூசமலைக்குப்பம் 3. அடயப்பலம்
4 Chengalput 5 Tirukkazhukundram 6 All Ijdia Sadhu Maha Sangh

95 चिराय चेङ्गल्पटपौरमुख्याः प्रतीक्षितास्मद्गुरुदेवयात्राः ।
विना मतद्वेषमधुस्समाना जनास्समे स्वागतमुच्चधाम्ने ॥

96 शिवालये साधुजनान्प्रदोषेष्विहाऽऽदिशत्स्वामिवरो हि यद्यत् ।
अकल्पतामन्दमुदे च तत्तत्स्फुरन्मताचारमहोदयाय ॥

97. तदोपलिप्सुर्बत योगतत्त्वं समेयिवान्भारत मात्तगन्धः ।
इयेष पाल्ब्रण्डननामधेयो गुरोः कृपां वेङ्कटराममित्रम् ॥

98 फलानि पुष्पाणि तथोपहारान्निवेद्य भूमावुपनम्य साधुः ।
पुरस्तमैक्षिष्ट गुरुं स देवं जिहासितैरोप्यदशो विरक्तः ॥

99 अनीहमानं स किमप्युदीर्ण स्थलासनासीनमुपोच्चदीपम् ।
ददर्श मन्दस्मितशोभिवक्त्रं गुरूद्वहं वह्निमिवाध्वरान्तः ॥

100 "गुरोरनुज्ञामुपगम्य किंचित्समीपतो द्रष्टुमुताभिवक्तुम् ।
यथाऽलमेषोऽभिलषामि वेत्तुं कदा नु राष्ट्रं समुदेष्यतीति ॥

101 वदन्ति कंचिज्जगदीशमार्याः जगन्नियन्तेति स रक्षितेति ।
प्रपत्तिरस्मिन्न कृता जनैर्वा जनान्न जागर्ति स रक्षितुं वा ॥

102 जना जगत्यां पतितास्सुदूरं विशिष्य पाश्चात्यजना विहीनाः ।
कथंनु दैवी प्रभजेत सम्पदिहैव तान्स्वामिवरः प्रसीदेत् ॥

103 पप्रच्छ पाल्ब्रण्डन इत्युदारः महागुरुं मूर्तमिवार्षतेजः ।
स्वमाभिजात्यं प्रकटय्य साक्षात् ततश्च जिज्ञासितयोगमार्गम् ॥

104 शनैः शनैरुक्तिपथेऽवरुध्य स्फुटावभासं क्रमवादभङ्ग्या ।
समन्दहासं स्मरणार्हभावं जगद्गुरोर्भाषणमन्यदेव ॥

105 "क्रमेण साम्पत्तिकवृद्धिरिष्टा भवेदिहान्यत्र च शस्त्रहानात् ।
स्थिरेऽरिषड्वर्गजये हि राज्ये प्रशान्तिसौख्यानि चिरं भवेयुः ॥

106 दयावतोऽन्यः क इहेश्वरोऽस्ति क्षमावतोऽसाध्यमिहास्ति किंवा ?।
बभूव कश्चित्वधुनाऽपि कश्चित्परेऽह्नि कश्चिद्भुवमुद्दिधीर्षुः ॥

107 यदा यदा लोभगदाभिभूताः परस्परक्रोधपिशाचदुष्टाः ।
अधर्ममग्ना अतिमात्रमत्र प्रजास्तदानीं परिणामकालः ॥

108 उपस्थितस्सम्प्रति काल एषस्तथापि यद्यस्ति धृताऽऽत्मशक्तिः ।
स यत्र कुत्राऽपि पुरः परस्तात्तदीयशक्त्या ह्यखिलं विभायात् ॥

109 प्रसन्नचेतोमुकुरे नराणां पदं लभेताऽपि स योगमार्गः ।
उषःप्रदोषौ किल तत्प्रशस्तौ स्थिरो युवाऽसौ यततां प्रशान्त्यै ॥

110 "यथार्थयोगेश्वरयोर्द्वयोरप्यसाध्यसाक्षात्करणो हि कश्चित् ।
द्वितीय आस्ते रमणो महर्षिर्यदीयसन्दर्शनतोऽस्ति सिद्धिः ॥"

111 इतीदमन्यच्च महातपस्वी यथावदैरोपविवेकिभक्तम् ।
अपूपुषत्सामयिकोपदेशैर्जगद्गुरुः पार्थमिवाहवान्तः ॥

112 यदेष साक्षात्कृतभारतश्रीः स्वकीयमन्वेषणमन्वगाप्रम् ।
महाप्रबन्धेऽलिखदन्यदन्यद्रहस्यमासीन्नु चिदम्बरस्थम् ॥

113 "नमोऽस्त्वसङ्ख्यातगुणाकराय नमोऽस्तु सङ्ख्यावदमोघधाम्ने
नमोऽस्तु सन्यासमहोत्सवाय नमोऽस्तु काञ्चीगुरुधामपूर्णे ॥"

114 इति स्तुवन्तं, तमपि स्तुवन्तं स्तुवन्ति चेद्यद्गुणरत्नकोशैः ।
कियान्लघुस्तत्स्तुतयेऽस्ति कोशः कियानिव प्रौढ इतीह चिन्ता !॥

115 श्रीचन्द्रशेखरगुरुर्महनीयकीर्तिः
निः श्रेयसाय जगतां समुपात्तयात्रः ।
नानादिगन्तचलनाहितभक्तिवीरु-
द्राङ्गप्रवाह इव दीव्यति शान्तशीलः ॥

इति श्रीचन्द्रशेखरेन्द्रसरस्वतीविजयमहाकाव्ये षष्ठ स्सर्गः

श्रीः

# सप्तमःसर्गः

1 प्राविशद्गुरुवरोऽप्यथ काञ्चीं कामकोटिमठशाश्वतकेन्द्रम् ।
आश्रयं लघुमहाशिवधाम्नां आदिशङ्करगुरोर्जयपीठम् ॥
2 क्षेत्रमेतदवनौ महनीयं पार्थिवं यदुमया करक्लृप्तम् ।
लिङ्गरूपमभिपत्य महेशो ह्याम्रनाथ इति सन्निधिमाप ॥
3 कामनेत्रजननी शिवमाप्तुं वल्लभं व्रतपरा पुरमध्ये ।
आदृतालयवरा सकलानां अम्बिकाऽजनि हि देवकुलानाम् ॥
4 उत्सवेषु निलयं त्विह देव्याः कुर्वतेऽन्यसकलोत्सवदेवाः ।
वीथिकाप्रचलनं परितःस्वं सूचयन्ति च परत्वममुष्याः ॥
5 आदिमो गुरुवरोऽत्र महाश्रीचक्रमालयवरे धुरि देव्याः ।
प्रत्यतिष्टिपदतो निजसिद्धिं प्रापदित्यमुकदेशचरित्रम् ॥
6 कामनेत्रजननीभवनान्तः साक्षिभूतमुभयं हि निषेव्यम् ।
ज्ञानपीठजयसूचकयूपो विग्रहश्च जगतीगुरुराजः ॥
7 साग्रहोन्मुखपुरप्रमुखाणां स्वागतादिमुपचारमपीच्छन् ।
अन्वहं परिचरन्परदेवीं मासमेकमवसद्यतिराजः ॥
8 कामलोचनपरेशिनिकेते पूजनक्रमविशेषविधाने ।
आधिकार्यमवहच्चिरकालात्कामकोटिमठमेतदनूनम् ॥
9 आधिपत्यगमनाद्गुरुनाथश्शोधनाय परदैवतधाम्नः ।
कुंभसेकविधये च शशास स्वाधिकारवशगान्मठशिष्यान् ॥
10 [1] रुद्रमेरुपुरमेत्य समीपे तत्र सुन्दरशिवालयभित्तौ ।
प्रस्तरोल्लिखितनीतिपथीतीनां शासनक्रमिकरीतिमबोधीत् ॥
11 ग्रामणीप्रभृतिशासकवर्गान् बोधनेच्छुरनुवाच्य सलीलम् ।
ऐतिहासिकदिशा प्रथितांस्तान् पङ्क्तिशो व्यवृणुताऽपि गुरुर्न ॥
12 दक्षिणेन परिसर्तुमुदेतुर्वर्त्मना [2] ह्यरुणगिर्यभिधानः ।
भूतपूर्वपितुरादृतमित्रं साह्यमातनुत सर्वमपेक्ष्यम् ॥
13 आदिकेशवसिषेवयिषया श्री [3] युङ्गवं. पुरमियान्व्रतिधुर्यः ।
वैष्णवैर्नगरवासिजनैश्च स. स्वागतादिविधिना बहुमेने ॥

---

1 Uttara merur, North Arcot Dt 2 Chunambat Jamindar Divan Bahadur C Arunachala Mudaliar 3 Sri Perumbudur

14 पुष्पदन्तकविपद्य [1] विमर्शैरादिशन्निजमतान्तरदृढ्यम् ।
सौमनस्यमभयप्रदमाद्यं सेवनीयमिति सद्गुरुरार्यान् ॥
15 कोकिलाख्यनिजभक्तपुरन्ध्र्या प्रार्थितोऽनुयशयन्पुरमायात् ।
स्वामिनो विजयलाञ्छितयात्रा तत्र तामुपगतामपुनीत ॥
16 सद्गुरुस्तदनु सन्निदधे द्राक् सन्निधिश्शमदमादिगुणानाम् ।
[3] चित्पुरे; प्रथितनम्बिमहीपो यत्पुरा ननु गुहश्वशुरोऽशात् ॥
17 साक्ष्यमत्र कथयन्निव वल्लीशैल अस्ति तणि [4] काचलसीम्नि ।
नीव [5] नाम-कमनीयसुकुल्या सिञ्चति प्रियशिवालयपादम् ॥
18 पूर्णकुंभविधिनाऽनुपदं तं चित्पुरे दशशताधिकपौराः ।
व्यासपूजनविधौ प्रतिनन्नं चन्द्रशेखरगुरुं सममीयुः ॥
19 वेदवाद्यभजनावलिघोषैस्सोपहारबिरुदैरुपवाटम् ।
सद्गुरुं शिबिकया परिवाह्य प्रापयन्प्रमुखपौरजनाश्च ॥
20 देवधाम [6] निकटे कृतभूषे मण्डपे क्रमुककेरफलाद्यैः ।
तोरणैःकदलतालरसालैर्व्यासमर्चयदसौ गुरुवर्यः ।
21 पूजनान्तविहितेऽर्थविचारे शास्त्रिभिःकविवरैश्च समाप्ते ।
सज्जनासवमहावभृथान्ते स्वामिनं बुबुधिरे शिवरूपम्
22 मासयुग्ममतिवाह्यतेज्यादीक्षया व्रतिवरेण समष्टया ।
पूरिता द्विगुणिता व्रतमासास्सज्जनैश्च गुरुसेवनभङ्ग्या ।
23 पुण्यकाल इति चन्द्रमसो यत् राहुणा ग्रसितमास तदानीम् ।
सद्गुरुस्सरिति मज्जनमाधात् विश्वरूपमिति चानघयात्राम् ॥
24 शारदीयनवरात्रसपर्यां चित्पुरे व्यतनुतार्थित एव ।
मानयन्ति सतताभिनिविष्टान्सज्जनान्खलु विशालमनस्काः ॥

---

1 The verse referred to here is त्रयी साङ्ख्य योग etc
2 Esayanur near Chittur, Andhra
3 Chittur
4 Thiruttani famous temple town
5 The river Niva
6 Near Agasteswara temple

25 चित्पुराद्गुरुवरः किल वेलूर्पत्तनं प्रथितबोम्मनृपाणाम् ।
शासनाङ्कितवितानपताकं सानुगस्समचरत्समभावः ॥
26 [1] तारकेशनिलयेऽथ वसन्तं तापसेश्वरमुपासत शिष्याः ।
वावदूकवणिगापणिकाद्याः श्रद्धया सहमतस्वपरांशम् ॥
27 सद्गुरोःप्रतिदिनं प्रतिपूजाभाषणं मिलितभक्तजनास्ते ।
चन्द्रदर्शन इवार्णवभङ्गास्सङ्ख्यया परिमितिं कथमापुः ? ॥
28 सद्गुरुस्स शिवरात्रि सपर्या कालहस्तिशिवधाम्नि विधातुम् ।
चित्पुरं तिरुपतिं समतीत्य क्षेत्रमेतदचिरात्प्रतिपेदे ॥
29 [2] स्वर्णमुख्य मलपायसि गाढं स्नात आश्रितरसालतलो यत् ।
दर्शनं गुरुवरोऽदित साक्षाद्दक्षिणामुखगुरोःश्रियमादात्! ॥
30 वायवीयमिदमाहुरुदारं क्षेत्रमन्तरचलद्धुतदीपम् ।
साधकाधिगतकुण्डलिनीश्रीलास्यविभ्रमविभावकमास्ते ॥
31 कालहस्तिसुजनाश्च महीप. स्वागतेन सहसा जयघोषैः ।
सद्गुशोऽभिययुराशु विदित्वाऽतर्कितागतजगद्गुरुपादम् ॥
32 कौतुकात्पुरपरिक्रमणान्ते सद्गुरुश्शिवमसेवत साम्बम् ।
क्षेत्रतीर्थपरिसेवनचित्त.पक्षमेकमधिसत्रमुवास ॥
33 दुष्करं गिरिपरिक्रममारादप्रकम्प्यमतिरा-क्षणदार्धम् ।
ताम्यता पुरजनेन सुदूरं सद्गुरुर्व्यतनुताऽनुसृतोऽसौ ॥
34 कश्चिदास विवशो दिनतापात् अन्य आस बहुदाहितपाद ।
स्विन्न सत्र परिमोहित दूनाः सेवका अपि तदाऽऽसत सेव्या. ॥
35 पादयोर्गुरुवरस्य च मृद्वोः स्फोटसन्ततिरदृश्यत तापात् ।
आधिभौतिकमृते हि तुरीयात्कः प्रभावमतिवर्तितुमीष्टे ॥
36 सातिरेकधृतिरेकमनस्वी काहितं लघु चकार गुरुर्नः ।
इत्यवादिपुरहो! बहुमानाच्चत्वरेषु भवनेषु जनास्ते ॥
37 स्वामिनं समुपवेश्य पुराणे दन्तकाञ्चनकृते हरिपीठे[3] ।
कालहस्तिनृपतिः पदपूजासत्कृतीरकुरुतामितभक्त्या ॥

---

1 Tarakeswarar temple in the Vellore city
2 Swarnamukhi river in the Kalahasthi town
3 Simhasanam

38 पञ्चगष्टितम १ पीठपतिर्यः तद्वदन्यगुरवश्च महान्तः ।
आसनं त्वलमकार्गुरितीदं प्राक्तनैरवगतं कुलपत्रै. ॥
39 याश्रया तिरुपतिं समवेतं स्वामिनं तदनु भक्तजनास्तं ।
स्वागतेन शिबिकाद्युपचारैश्चाश्रयन्सजयवेदविरावम् ॥
40 श्रीण्यलान्युपरि सप्तगिरीशं सेव्यमानमखिलैरुपचारैः ।
शिश्रिये च सकलानधिदेवान्शेषशैलमभितो गुरुदेवः ॥
41 जातिरत्न रचितां गलभूषां पीतवस्त्रमपि शेषगिरीशे ।
आत्मना सह समर्प्य महात्मा सद्गुरुर्हि समसेवत सेव्यः ॥
42 मज्जनं च गरुडोत्सवसेवां शुक्रवारसुभृतं ह्यभिषेकम् ।
सद्गुरुसमचिनोदवधानाद्वेङ्कटाद्रिविभवेऽतिमहिम्ने ॥
43 अर्चका अधिकृताश्च यथार्हं मानिता द्रविणैश्शुभवस्त्रैः ।
पण्डिताश्च गुरुणा सितसाल्वै स्तीर्थवासिजनता बहुनाण्यैः ॥
44 निर्झरेषु नियमादभिषेकस्फूर्तिमद्दुरितदूरतयाऽच्छम् ।
भस्मलिप्तमनपोढकलङ्कं चन्द्रबिम्बमिव तद्वपुरासीत् ॥
45 प्रत्यहं त्वनुसवं सरसाभिरान्ध्रगीर्भिरुपदेशविलासः ।
सद्गुरोरुपमितामरसिन्धुस्सज्जनैरमृतसेवमसेवि! ॥
46 प्रार्थितःप्रथितधार्मिकदर्भशास्त्रिनिर्मितमठे प्रियशिष्यैः ।
प्राचि वेङ्कटगिरौ नृपवंश्यै स्सत्कृतोऽवसदसौ गुरुदेवः ॥
47 वार्षिकीं च गुरुराजजयन्तीं तत्र सादरममानयदुच्चैः ।
पक्षवासपरिपावितभक्तो नूतनं २ पुरमियाय तदारात् ॥
48 निर्झरैरतिमनोहरमध्यं वस्तुतोऽभिनवमेव पुरं तत् ।
नैजसन्निधिवशादपि नूलं साधयन्स गुरुदेव उवास ॥
49 जग्मिवांस्तदतु बुक्कनिवासं ३ शिश्रिये गुरुवरः ४ खरवाटम् ।
वाच्यवाचकपुटीमिव दीव्य द्व्यङ्कचनैष्ठिक सभेयधुरीणः ॥

1. Pujysa Sri Mahadevendra Saraswathi swamigal of Kanchi 65th *Pontiff of Kamakoti Peetha
2 Puttur a small town
3 Bukka villege near Nagari
4 Karvetnagar

50 सत्कृतस्सविनयं पुरपालैः स्वागतादिबहुमानविधानैः ।
दिद्युते गुरुवरोप्यनुगृह्णन्दक्षिणाग्निरिव हव्यसमृद्धया ॥
51 चन्द्रमौलिभगवत्स्नपनार्थं तत्पुरीपतिरुदारमनस्कः ।
सन्निधौ रजतनिर्मितधारापात्रमेकमकरोदुपहारम् ॥
52 बुक्कनामकमिदं महदास्ते क्षेत्रमुत्तमकुशास्थलनाम्नी[1] ।
पाञ्चगङ्गजलपूरविभाव्यस्रोतसां परिणतिर्यदुपास्ते ॥
53 यत्र देवसदने शिवविष्ण्वोस्सन्निधिद्वयमभेदनिदानम्[3] ।
प्रायशो विवदमानजनानामग्रसाक्ष्यमिव साधु विभर्ति ॥
54 तादृशे प्रकृतिसुन्दरधाम्नि व्यासपूजनमधादतिशस्ते ।
मासवासरसिकश्च तदानीं सद्गुरुःपरम-निर्वृतिमाप ॥
55 कूपमेकमनुभूतविभूतिस्मारकं पुरजना हि खनित्वा ।
व्यासतीर्थमिति सार्थकनाम्ना चक्रिरे प्रथितसद्गुरुभोग्यम् ॥
56 साधिते हरिहरालयजीर्णोद्धारणं कलशसेक इतीमे ।
बुक्कजानपदसाधुजनानां आहतुः स्वगुरुसेवनपुण्यम् ॥
57 सन्निधौ गुरुवरस्य सुक्लृप्तं कुंभसेकमुपसेवितुकामाः ।
सज्जनाश्शतसहस्रमपीयुश्चित्पुरादनुगतमद्रपुराच्च[4] ॥
58 "यात्रया सदुपदेशवचोभी रक्षितव्यमिति" मद्रपुरीया ।
संयमीन्द्रसविधे बहुवारं प्रार्थनाऽजनि पचेलिमतेद्धा ॥
59 बुक्कधाम्नि समनुष्ठितचातुर्मास्यतः परमसौ गुरुवर्यः ।
आययौ सपदि सादरम[5] द्रान्यात्रया हि तणिकाचलमार्गात् ॥
60 नागरप्रतिनिधिस्सरुपाह्वो[6] रामनाममहनीय उवाच ।
"स्वागतं नगरपालिकया श्री स्वामिने करणीयमिहेति" ॥
61 निर्विवादमुररीकृतमेतन्निश्चितं च नगरपालिकयेदम् ।
किन्तु सद्गुरुरुदास्त तदर्थे धन्यवादमदिशत्तु मठीयैः ॥

---

1 A river called Kusasthali 2 Small water falls five in number namely Panchaganga the source of Kusasthali river 3 The God Siva here is KasiViswanatha and Vishnu is Prayagamadhava within the same temple and Prakara 4&5 The city of Madras 6 Sri A. Ramaswami Mudaliar

62 तन्मयूर [1] पुरमार्जितशोभं तोरणैर्मृदुलपुष्पवितानैः ।
आलयीकृतकलालयरङ्गं प्राविशत्कृतजयादिमघोषम् ॥
63 पूर्णकुम्भविधिपूर्वमुदीर्णै र्वेदवाद्यजयमङ्गलतूर्यैः ।
अभ्युपेतशिबिकापरिवाहं स्वागतेन गुरुमुद्ययुरार्याः ॥
64 तत्र सङ्गतजनाक्षिसहस्रं निर्भरेण मनसा विललास ।
स्वर्णवर्णरुचिरे गुरुरूपे कौमुदं वनमिवामलचन्द्रे ॥
65 केचिदच्छमधुरस्मितदीप्त्या केचिदीषदभयाञ्चितदोषा ।
द्वित्रवाक्यसुधया ननु केचिद्भाविता गुरुवरेण तदानीम् ॥
66 तन्निशाप्रथमयामविरामे कामकोटिवरपीठ्यतीन्द्रैः ।
प्रस्तुता शिवपराक्रमभङ्गी विस्तरेण च कपालिविभूतिः ॥
67 राजमान्य गुरुपीठ्यतीन्द्रस्संमुखं तु गत इत्यपुत्सः ।
रङ्गनाथधनिकस्त्रिसहस्रं साधुयाचकजनान्वसनान्नैः ।
68 सद्गुरोर्नियमयोग्यजलानां साधनाय विनया [3] त्पुरमुख्यः :
चन्द्रशेखरतटाकमखानीत् नैजसंस्कृतकलालयरङ्गे ॥
69 सेवितःकुतुकिमद्रपुरीयैश्शारदीयनवरात्रिषु भक्तया ।
अम्बिकां सनियमं च समार्चन्मङ्गलाय महते गुरुदेव ।
70 प्रत्यहं विधृतदैवतभावं भाविताश्शुभगुणाश्च पुरन्ध्रीः ।
कन्यकाश्च नववर्ष वयस्का मङ्गलोपकरणैरमहोत्सः ॥
71 वेदपाठभगवत्परगीता [5] ब्रह्मसूत्ररघुवीर [6] चरित्रैः ।
सद्गुरोर्मठ उवाह परेश्यास्सन्निधिं बहुविधैर्जपहोमैः ॥
72 सर्वलोकशरणीकरणार्हा देवता सकलदेशविधात्री ।
सा जगद्गुरुवरेण तदानीं मद्रमात्रनिलयेव वितेने ॥

1. Mylapore Madrass
2 Sanskrit college Mylapore
3 Sri S K. Ranganatha Uyer
4 Dharmarakshamani Sri K Balasubrahmanya Iyer
5 Bhagavadgita
6 Ramayanam

73 भक्तशिष्यजनता नवरात्रे सङ्घशो ह्यनवलोकितपूर्वाम् ।
भक्तिवश्यपरमेशिसपर्यां तां जगद्गुरुकृतां नु सिषेवे ॥
74 आतुरा इव तदा दृढभक्त्या सद्गुरौ प्रथितमद्रपुरीयाः ।
तत्तदिष्टमुपहारमुदाराः प्रार्पयन्विधुतभेदविचारम् ॥
75 यत्र लोकगुरुरानवरात्रं पूजनं तदनु भाष्यविचारम् ।
आतनोद्विजयमूलदशम्यां मण्डपोऽजनि स [1] भाष्यजयाख्यः ॥
76 कैश्चिदुत्तमगुरोस्सविलासं मौद्रिकप्रमुखमद्रपुरीयैः ।
मुद्रणे प्रवचनोद्धततत्त्वान्यादृतानि निरवशेषतयापि ॥
77. मन्दहासमधुराकृतिसभ्याऽऽवर्जकेक्षणरुचास्वरयोगाः ।
ते कथं नु सहजा गुरुवर्ये मुद्रिताः स्यु रिति तेऽपि विषेदुः ॥
78 पुस्तकानि गुरुराजनिसृष्टान्यादरात्प्रतिगृहं निधिगोपम् ।
गोपितानि विलसन्त्यविभक्तं गोत्ररिक्थमिव सन्ततिभोग्यम् ॥
79 अप्रतर्क्यगमनेन गृहान्तः शिष्यभक्तभिषजश्चिरकाङ्क्षाम् ।
हृद्गतामवसरे स यतीशस्साधयन्हृदिशयं परमाख्यत् ॥
80 विश्वमङ्गलकृते श्रुतिसिद्धमग्निकार्यमृषिभिश्च निरूढम् ।
कुर्वतःकति सदा बहुमानैस्सचकार कति कारयितृन्वा ॥
81 यायजूकमणयेऽनुपमाप्ता [2] वाजपेयितिलकाय यतीन्द्रः ।
छत्रमुत्तमसितं प्रतियच्छन् चक्रवर्तिकुलकार्यमतानीत् ॥
82 [3] कश्चिदास सुधियां प्रवरोऽन्यो [4] धर्मकर्मधुरन्धर आसीत् ।
[5] धार्मिकःस्वयमभाच्च तदन्यस्ते कृता हि गुरुणा विरुदाढ्याः [6] ॥

---

1 Bhasyavijaya Madapam

2 Thandankorai BrahmaSri Appadurai Dikshitar

3 Mahamahopadhyaya Sri S Kuppuswami Saatry, Sanskrit Professor, Presidency College, Madras

DarsanakalanidhiV-Title

4 Advocate Sri T R Ramachandra Iyer Title "Dharmika Dhurandhara"

5 Advocate Sri K Balasubrahmanya Iyer Title- "Dharmarakshamani"

83 [1] सोऽपि सद्विरुदपात्रमतानि स्वामिना नगरवासिजनानाम् ।
आप्तमित्रमधरोत्तरवर्जं आर्जयंस्तदुपकारमभाद्यः ॥
84 चेन्नपट्टणविसर्जनवेलाभाषणं द्विजजनानुपदिश्य ।
यत्कृतं गुरुवरेण गभीरं शश्वदर्हति पदं स्मरणीयम् ॥
85 ग्रामजीवनमुपेक्ष्यनगर्यां ब्राह्मणास्तदनुसारिजनाश्च ।
सान्तरायमवधानविहीनं हीनमेव दधते निजकार्यम् ॥
86 स्त्रीभिरद्य पुरुषैः परिधानमल्पमूल्यमुररीकरणीयम् ।
तक्रपानमधरीकृतकाफीपानमेव नितरां स्पृहणीयम् ॥
87 तक्रमाहुरमृतं सुखमूलं अल्पमूल्यमखिलैस्सुखसेव्यम् ।
काफिका त्वपरिहार्यमहार्घा खातपात इव दीनजनानाम् ॥
88 दाम्भिकं यदधुना वरशुल्कं चीयते द्विजकुलेषु सुदूरम् ।
दूषितां हि वणिजामिव वृत्तिं स्थापयद्वणिजनैः परिवर्ज्यम् ॥
89 प्रातरेवमरुणोदयतः प्राक् दैवमाह्निकमबाधितमेव ।
प्रत्यहं चरति यो द्विजवर्यस्तस्य नास्त्यसमये यमबाधा ॥
90 शिक्षकाः प्रवचनार्थमजस्रं चिन्तनेन सुखसङ्क्रमयोग्यम् ।
आश्रितेषु विनियुज्य सदोच्चैर्धारयेयुरमृतं निजरूपम् ॥
91 औषधं सनियमादृतपथ्यं वीर्यवत्तरमिवोत्तरकाले ।
शिक्षणं व्रतशतोपरि सिद्धं शैशवे फलति शन्तिसमृद्धम् ॥
92 एवमादिमुपदेशविसर्गं पट्टणे व्यधित [2] मत्तमयूरे ॥
तापसस्तदनु सात्त्विककेन्द्रमाससाद तिरुवोत्तिपुराग्र्यम् [3] ॥
93 त्यागराट्त्रिपुरसुन्दरिकाम्बादर्शनं निखिलभक्तवरेण्यम् ।
आचिनोद्यतिपतिश्शिवतातिं यत्तदास्तिकमहाजनपुण्यम् ॥
94 आदिशङ्करगुरुप्रतिबिम्बश्रीचक्रराजनिलयादिविलासम् ।
ब्रह्मवासुकिसुपूजितमेतत् श्रेयसेऽस्तु महते शिवधाम ॥

---

1 Rao Bahadur A Krishnaswami Iyer, Retd Police commissioner, Madras Title-Paropakara-Chintamani 2 Mylapore
3 Tiruvottiyur

95 [1]अप्पसुन्दरसुगीतविभूतावालये त्रिपुरमातुरिहार्चाम् ।
कुर्वते द्विजवरा:श्रुतिरीत्या ते शिवस्य तु शिवागमरीत्या ॥
96 कामकोटिमठसद्गुरवोऽन्येऽध्यासितैतदनघालयदेशाः ।
कुर्वते स्म तपसां च समाधेराश्रमं समुचितंचिरकालात् ॥
97 दक्षिणेन शिवमन्दिरमत्र श्रीमठान्तरुभयोश्च समाध्योः ।
एकषष्टितमपीठपतीनामेक आस महतामिति विद्यात् ॥
98 अन्यदन्यमहनीयगुरूणां ब्रह्मभावनिलयस्थलमाहुः ।
पुण्य-पुण्यचरितोभयसङ्गः कुत्रचित्करुणया शिवयो र्हि ॥
99 एवमत्र कति संस्थिति [2]धामान्यादरार्हयमिनामिति भक्तया ।
विस्मयस्तिमितलोचनमस्मत्सद्गुरो र्हि ददृशे प्रियशिष्यैः ॥
100 आज्ञया यतिवरस्य शुभंयोः श्रीमठं च यमिनां च समाधीन् ।
सादरं परिकरैः परिशोध्य प्रत्यहं व्यदधतोचितपूजाः ॥
101 "वेदशास्त्रविहितं कुरुतोच्चैः कर्म; निष्फलमुदस्यत दम्भम् ।
पूर्तधर्ममनुतिष्ठत यावच्छ्रेयमार्जयत भूतदयार्घम् ॥
102 सत्यमेव वदतानुपरोधं साधुवर्गमुपलालयतोच्चैः ।
दूरतस्त्यजत भेदविचारं नूनमाचिनुत सोदरभावम् ॥
103 वन्दनं प्रतिसवं प्रियपित्रोस्सद्गुरोश्च कुरुतामितभक्त्या।
प्राप्नुतानुपमितां गतिमुच्चैर्भद्रमातनुत भारतमातुः ॥
104 एवमादिमुपदेशविशेषं साशिषं गुरुवरो व्यसृजत्सः ।
सर्वदिक्कजनसेव्यमसेवि ह्यादरात्तदिह मद्रपुरीयैः ॥
105 दीपाङ्कुराय भवतामसमञ्जयानां
मोक्षाङ्कुराय मतधर्मविचारकाणाम् ।
निन्दाङ्कुराय ममतान्धकनास्तिकानां
आचार्यवर्यचरणाय नमोऽस्तु नित्यम् ॥

इति श्री चन्द्रशेखरेन्द्रसरस्वतीविजयमहाकाव्ये सप्तम-स्सर्गः

1 Saint Appar and Sundarar
2 Samadhi place

श्रीः

# अष्टमस्सर्गः

1 ततस्तथाभावितमद्रपौरो महामखासेवनमीहमानः ।
इयाय निर्व्याजदयानुभावो जगद्गुरुः पावनकुंभकोणम् ॥

2 यदीयनागेश्वरलिङ्गमुद्यन्प्रभाकरःस्वीयकरैर्विसर्पी ।
मनोज्ञकार्तस्वरवर्मणेव प्रसाधयन्नन्दति मेषमासे ॥

3 पुराणमेतन्ननु भास्करीयं पुरं प्रसिद्धं च नवीनतायाम्
प्रसिद्धगङ्गादिमहानदीनां समागमो माघमखेऽत्र पुण्यम् ॥

4 सुधाभृदाप्लवमानकुंभःकुतोऽपि संवर्तपयःप्रवाहे ।
यदेककोणस्थितिहेतुनाऽन्ते तथाऽभिधानास्पदमाततान ॥

5 शिवेन विद्धोऽमृतकुंभ आराद्यतोऽनुसुस्राव स पञ्चवक्त्रैः ।
ततोऽनुजातानि शिवस्थलानि समानि कोशैरभितोऽपि पञ्च ॥

6 इहैव सङ्क्रान्तिदिनेऽप्युदारे पुराणहेमर्षिमहानुभावः ।[1]
तपोभिराकृष्य च शार्ङ्गपाणिं विवाहयामास निजां[2] तनूजाम् ॥

7 ऋते मठेभ्यस्त्रिमताधिपानां न केवलं वैष्णवशैवधाम्नाम् ।
मठैश्च शैवार्हतदेशिकानां इदं पुरं पात्रमुत प्रशस्तम् ।

8 गुरौ प्रविष्टे सति सिंहराशिं सकृत्प्रतिद्वादशवत्सरान्तम् ।
महीयते माघमहामखाख्यं. विशिष्य पुण्याहमिहास्तिकाग्र्यैः ॥

9 दिनद्वयात्पूर्वमुपासदद्राक् महागुरुर्मद्रपुराद्यतीन्द्रः ।
महामखस्नानमधाद्यथावद्वसंश्च मध्यार्जुन[3] शिष्यगेहे ।

10 तदा च सर्वालयदेवतास्तत्तटाकतीर्थोत्सवमाननाय ।
गुरूद्वहस्साधितसन्निधानास्सशिष्यसङ्घस्सहसा सिषेवे ॥

1 A sage called Hemarshi 2 Komalavalli, daughter of Hemarshi
3 Sri R NarayanaSwami Iyer, Proprietor of Law Journal Press Mylapore, Madras

11 महामखाख्योत्सवनिर्विविक्षा चिरादवाप्तस्वगुरुद्रहार्चा ।
इति द्वयं पौरुषलेशसाध्यं फलं जनान्लक्षश आचकर्ष ॥

12 नवीनवाणिज्यविवृद्धिहेतोः [1]प्रदर्शिनीमुत्सवकालयोग्याम् ।
समाबभाराखिलमोदधात्रीं तदा महापौरसभा सघोषम् ॥

13 पुरे प्रसिद्धाःकति धर्मशालाः उदारभावाःकति वा धनाढ्याः ।
चक्रिरेऽन्नाद्यमहोपकारं स्थलान्तरेष्वागतयात्रिकाणाम् ॥

14 शिवेन [3] यत्साधितमन्नदानं मठाङ्गणे शङ्करसद्गुरूणाम् ।
तदा प्रशस्यं तदभून्नितान्तं शिवप्रसादायितमास्तिकानाम् ॥

15 अपोढकल्कं व्यवभासयत्तं जगद्गुरुर्लोकहिते तदानीम् ।
पुरेव गोविन्दमखीन्द्रगुप्तो विभाति यो ज्ञानमयः [4] प्रदीपः ॥

16 जगद्गुरुस्तं निलयं कलायाःपुनर्नवोन्मेषसमुज्ज्वलान्तम् ।
अमूल्यवेदागमगन्धजृम्भत्प्रसूनमेवाकलयत्कटाक्षैः ॥

17 महामहाचार्य [5] इति प्रथायाःपात्रं स मन्नार्गुडि [6] शास्त्रिपौत्रः ।
पतिर्भवन्यज्ञपतिः [7] कुलस्याप्यदः कलाक्षेत्रमलञ्चकार ॥

18 महामखान्ते महतो महीयानुवास मध्यार्जुनपुण्यधाम्नि ।
यदप्पसम्बन्धमुखा हि भक्ताः प्रतुष्टुवुश्शाम्भवमुख्यदेशम् ॥

19 उपासमानो यदधीशलिङ्गं निरस्तदोषोऽजनि [8] पाण्ड्यराजः ।
'यथार्थमद्वैतमिहे'ति वाक्यान्निधाश्रुतादादिगुरुर्जहर्ष ॥

20 तदाब्दिकीं शङ्करसज्जयन्तीं दिनेषु पञ्चस्वतिविस्तरेण ।
जगद्गुरुर्मानयति स्म विद्वत्सभासु वेदान्तविचारकल्पैः ॥

1 Exhibition 2 Municipality 3 Theperumanallur Sivan.
4 Rajah Pathasala 5 Mahamahopadhyaya Title Conferred on scholors by the then British Government
6 Mahamhopadhyaya Mannargudi Raju Sastrigal
7 Yagneswara Sastrigal 8 Varaguna Pandyan.

21 पतञ्जलिव्याघ्रपदादिमानां तपोधनानां चिरकालसिद्धम् ।
इयेष साक्षाद्गुरुराडवाप्तुं चिदम्बरे श्रीनटराजसेवाम् ॥

22 [1]चतुर्भिराप्तैश्शिवभक्तवर्यैः प्रगीत आस्ते नटराजदेवः ।
यदीयसन्दर्शनमात्रतो हि स्वयं चिदानन्दघनो नरः स्यात् ॥

23 स्वयं स माणिक्यवचोऽभिधेयश्चिदम्बरेशस्तमुपाचकर्ष।
स [2]नीलकण्ठस्स च [3]नन्दनाख्यस्स [4]दीक्षितश्चात्र विमुक्तिमापुः ॥

24 [5]अनन्तनामा शिवताण्डवर्मिः प्रदोषनृत्तं स ददर्श योगी ।
प्रभातनृत्तं तु नटेशितुस्सः मुनिर्महाव्याघ्रपदाभिधेयः ॥

25 अवाङ्मुखो नृत्यति चित्सभेश इहाच्युतः पूर्वमुखो हि शेते ।
उभौ च राजौ युगपन्निषेव्य स्वयं नरःस्यादिह राजराजः ॥

26 मृदङ्गतालौ हरिपद्मयोन्योस्सहर्षमावादयतोर्नटेशः ।
करेण ढक्कां नवपञ्चवारं प्रणादयन्नृत्यति भक्तिवश्यः ॥

27 स पाणिनिर्व्याकरणैकमूलं प्रगृह्य ढक्काध्वनिसूक्ष्मरूपम् ।
विरच्य माहेश्वरसूत्रजालं जगद्धितायैव ततान शब्दम् ॥

28 चिदम्बरं साग्रहमभ्युपेता जगद्गुरुस्सूचनवर्जमेव ।
उषस्यनुत्थाय च तीर्थसेवां ददर्श देवं कनकालयेशम् ॥

29 उपस्थितं कञ्चन काञ्चनाभं शिवाकृतिं वीक्ष्य तदा भ्रमेण ।
विसिष्मिये दीक्षितपुङ्गवेन स्वकानुपानेतुमयुञ्जि तूर्णम् ॥

30 क्षणेन सर्वेऽपि स भक्तपौराःसमेत्य ते दीक्षितवर्गमुख्याः ।
यथोचितं स्वागतवाचनाद्यैर्जगद्गुरुं तं ह्युपतस्थिरे द्राक् ॥

31 सभेशनिर्देशवशादिवान्तः प्रवेश्य ते स्तम्भसहस्रयुक्ताम् ।
स्वलङ्कृतां राजसभां यतीन्द्रं न्यवासयन्सादरमेकमासम् ॥

1 The famous four Nayanmars-Thirunavukkarasar, Sambandhar, Sundarar and Manickavachakar 2 Thirunilakantha Nayanar 3 Nandanar 4 Sri Appaya Dikshitar 5 Patanjali

32 तदा तदा सेवितमोक्षलिङ्गः स चन्द्रमौलीश्वरपूजनान्ते ।
प्रतिप्रदोषं ह्युपदेशवाग्भिस्समोऽनुजग्राह समांस्तदानीम् ॥

33 विशेष ¹ पावाटनिवेदनादिस्थलीयसेवाविधया सभेशम् ।
सरत्नहेमाञ्चितचन्द्ररेखासमर्पणेनाऽपि गुरुस्सिषेवे ॥

34 परङ्किपेट्टाख्यमदूरवर्तिप्रदेशमात्मीयपदक्रमाङ्कम् ।
यदैच्छदश्रान्तजनोपकारो जगद्गुरुस्तं समयान्मुसाल्मः ॥

35. पितुर्हि पूर्वाश्रमसंभवाद्यस्समाप्तविद्यो ² मरकारनामा ।
न केवलं शैशवमित्रमासं विभाति भक्तेष्वसमोऽग्रगामी ॥

36 अमन्दमौनव्रतमादधानस्स मन्दहासेन धनाढ्यमेनम् ।
तदाऽनुजग्राह यदस्तभेदो जगद्गुरुत्वं समियेष पूर्णम् ॥

37 "यतो ह्युदेत्यान्तरभक्तिरिद्धा ततो भवेदीशकृपाप्रवाहः" ।
विभावयन्नित्यमुदग्रभावश्चकार भक्तान्प्रकटाद्भुतात्तान् ॥

38 ततो बहुग्रामटिका व्यतीत्य प्रवर्ग्यतञ्जापुरशिष्यवर्गैः ।
प्रयाचितः श्रीमुखवत्सरीयां व्यधत्त च व्यासमहर्षिपूजाम् ॥

39 सहस्रशो भक्तजनावृते तन्महालये सा बृहदीश्वरस्य ।
समाभृता स्मारयति स्म सर्वान्युधिष्ठिराख्वरमेशपूजाम् ॥

40 सहायतश्शास्त्रकलाधराणां व्यधान्मुखा शा³भवने मनोज्ञे ।
जगद्गुरुर्मासचतुष्कदीर्घां तथैव तावन्नवरात्रपूजाम् ॥

41 प्रतापसिंहो युवराजधीरः प्रभुश्च जोषी मठसाह्वयधाताम् ।
तदा मुखाशाभवनं भवन्तौ जगद्गुरुस्मारकसार्थवाहौ ॥

42 तदैव काशीगमनप्रकारं महागुरुर्ज्ञातुमपीहमानः ।
अनन्तकृष्णाख्ययुवान मुद्यत्कुतूहलं प्रागुदयुङ्क्त गन्तुम् ॥

---

1 Pavata Naivedyam in the famous Nataraja temple of Chidambaram
2 Bava Marakkar 3 Mukasa building in the West Main Street, Tanjavur

43 महागुरौ निस्तुलभक्तिमिद्धां विपत्सु धैर्यं च शरीरदार्ढ्यम् ।
विहाय काशीगमनं तु पद्भ्यां सुदुष्करं तन्नियमानुसारम् ॥

44 कृतं च कार्यं गुरुभिः प्रतीष्टं निवृत्य वृत्तं गुरवे न्यवेदि ।
नियोज्यसाफल्यमुदग्रशक्तेः प्रभोः प्रभावाद्धि महाधिकारे ॥

45 'यथानिदेशं करवामहा' इत्युपांशु गङ्गातटवासिमुख्यैः ।
निवेदितं यत्तदवोचदाराद्गुरोस्तु कुन्नक्कुडिशिष्य 1 वर्यः ॥

46 "प्रयाणमार्गेषु परिच्छदानां महागुरोर्वा निरुपाधि सौख्यम् ।
स्वदेशसंस्थानमुतान्यराज्यं क्रमाद्विदध्या"दिति नीतिरासीत् ।

47 उदक्पथा ग्रामपुराण्यतीत्य क्रमेण दैनन्दिनपादयात्राम् ।
प्रपूरितक्रोशकविंशतिं द्रागदधे यतीशानुगयात्रिवर्गः ॥

48 तदन्तरा चिन्नतिपासमुद्रे 2 निवासमास्थाय च मासमेकम् ।
नृसिंहमासेव्य समीपदेशे इयाय कर्नूलपुरं यतीशः ॥

49 'निवेशनस्थानजुषां जनानां समादृतासेवनसत्क्रियाणाम् ।
स्थले स्थले ऽमेयतयैव दध्रे पदं प्रसादार्थिजनान्विहाय ॥

50 वनान्तरे दुर्घटशैलमार्गानतीत्य कर्नूलपुराददूरे ।
अधित्यकायां ननु सन्निधत्ते प्रसिद्धमल्लयर्जुन3संज्ञलिङ्गम् ॥

51 सदैव सङ्ग भ्रमराम्बिकायास्समार्जनायैव समल्लिगन्धम् ।
शिवं शिवानन्दलहर्युपासापरोऽस्तुताद्यस्स हि शङ्करार्य. ॥

52 "यदप्यसाध्यं शिवरात्रिवर्ज तदीयसन्दर्शनमि"त्यवादि ।
जगद्गुरुःकालविलम्बलेशासहिष्णुरैच्छत्तदनन्तरेऽह्नि॥

53 प्रसूनवज्रौ सदृशौ तु येषां किमस्त्यसाध्यं जगतःपराणाम् ॥
जगद्गुरुस्साग्रहमात्तयात्रः क्षणादिवापद्भ्रमराम्बिकेशम् ॥

54 ददर्श चानन्दभरान्महेशं समल्लिकेशं भ्रमराम्बिकां च ।
नुनाव पद्यैर4: प्रथमार्यगीतै. ततान भक्तान्घुरि विस्मितांश्च ॥

---

1 Kunanakudi Swaminatha Iyer 2 Chinnatippasamudram
3 Mallikarjunaswami 4 Preceptor of the World-first Jagadguru Sri AdiSankara's poem is Sisvanandalahari

55 परेऽह्नि चन्द्रग्रहणं बभूवेत्यगाधपातालसुगाङ्गपूरे ।
व्रती स सस्नावधिपर्णशालं समार्चदह्नाय च चन्द्रमौलिम् ॥

56 प्रकाशलाभाय, नृशंसजीवप्रगाढशैत्यादिनिवृत्तये च ।
समाद्रियन्तानुचरैः प्रदाह्य विशीर्णपर्णान्यपि दीपयष्टयः ॥

57 वनान्तरादागतचेञ्चुजात्याः नृशंसभावा अपि किंपचानाः ।
धनुर्धराः कापिशवज्रकायाः कुतोऽप्यहो ! स्वामिनि भक्तिमूहुः ॥

58 पदे पदे घातुकभीतिनोदं पथप्रदर्शं, परिबर्हवाहम् ।
चिराय दृष्टानुचरा इवासन् जगद्गुरोस्सा ह्यनुभावशैली ! ॥

59 विदग्धभावं न च सभ्यतां वा विदन्ति ते वैदिकता तु दूरे ।
मृगा इव व्याधसुगीतिना ते प्रकाममाकृष्टहृदो बभूवुः ॥

60 यदा गुरुस्तोषयितुं समेतानकल्पयद्रूप्यकदानमानैः ।
तदा हि ते प्रोचुरनन्यभावाःस्वभावभक्ता इव पर्वतीयाः ॥

61 "इदं तु धर्म्यं यदुदारभावे समागते स्वामिनि नाट्यसेवा ।
कुलस्य नः श्रेयसि चेद्दयार्द्रः प्रसीद च स्वीकुरु नाट्यसेवाम् ।

62 तथेति दाक्षिण्यदयार्द्रचेता गुरुर्मठीयेष्वपि दुर्मुखेषु ।
जग्राह सेवामनुपाधिबद्धामतोषयत्तानमितान्नदानैः ॥

63 गुरोःप्रसादीकृतभस्मभूतिं क्षणादवापुः किल पर्वतीयाः ॥
इतीव सिन्धुःशिरसा तु तुङ्गा हृदा च भद्रा जननीसमाना ॥

64 ततस्समासेव्य [2] सदलंपुरीशं स तुङ्गभद्रातटसन्निधानम् ।
उपान्तविश्रान्त निवेशमागान्यदा प्रपूतानविनोद्यतीन्द्रः ॥

65 महानदीं तां सहसा प्रतीर्य स्वपत्तनं भाग्यवशादुपेतम् ।
गुरुं कृतस्वस्त्ययनाऽभ्युपैत्सा सपौरसङ्घा [3] गधवालराज्ञी ॥

---

1 A band of tribal people called Chuch. 2.Mahaswami took his bath in the Tungabhadra river near 'Alampuri' on the Sivaratriday, the 12th February 1934 3 Gaduval State within the state of Hydrabad

66 सपूर्णकुंभं नगरोपकण्ठे महान्तमभ्यर्णमुपेयिवांसम् ।
समभ्युपेयुःकिल हैदराबाज्जनाश्च पौरप्रमुखास्तदानीम् ॥

67 सुदूरविस्तीर्णपथा विलङ्घ्य प्रदक्षिणीकृत्य पुरप्रदेशान् ।
जगाम विश्रान्तिगृहं निजामप्रशासकैस्सादरसत्कृतोऽसौ ॥

68 निजाममन्त्री प्रथिताभिधानश्चकार ² कृष्णो गुरुपादपूजाम् ।
समर्पयामासुरुपायनं ते दिनान्तपर्याप्तधनं मठाय ॥

69 निजामदेशानुगतोत्तरेण प्रपूरयन्पुण्यसरित्पुराणाम् ।
तदा स्वसान्निध्यफलैश्च पुण्यैर्जगद्गुरुर्नागपुरीं प्रपेदे ॥

70 त्रिभाषिभूयिष्ठजनत्रिवेणीप्रयागसंभेदपदं भवन्ती ।
सनातनं धर्ममधिब्रुवाणं त्रिधा ³ पुरी सद्गुरुमभ्युपैत्सा ॥

71 नीतिज्ञपाण्डेप्रमुखाश्च विद्वन्मणी च वर्णेकरतानसंज्ञौ ।
उपाचरन्भक्तिवशात्तमीड्यं प्रसादितास्सद्गुरुणा यथार्हम् ॥

72 निदाघकाले निरुपाधिसेवापरान्निशीथेष्वनुगामिशिष्यान् ।
गुरुं च भास्वानुपविन्ध्यशैलं दिवा स्मयाद्दीर्घतरं लुलोके ॥

73 श्रमोऽस्तु मा माऽस्मदपेक्षयेति यदा गुरुर्दित्सति तद्विरामम् ।
तदा विदूये परिवाहकैस्तथा कियन्महत्सेव्यसुसेवकत्वम् ! ॥

74 चतुर्दिनैराश्रितसेवकानां जबल्पुरीभक्तजनस्य चाशु ।
श्रमापनोदं च समीहितं च प्रपूरयामास दयानिधिस्सः ॥

75 स नर्मदायां नियमावगाहं समाचरद्यद्वशिनां वरेण्यः ।
तदेव तस्याः स्खलितं स्रवन्त्याः चिरायितं पुण्यनदीत्वमूल्यम् ॥

76 ततः परं सञ्चरता त्रिवेणी प्रयागधामाऽक्रियतोपसेव्यम् ।
यदेव देवा अपि शर्मधर्मावपेक्ष्य नाकान्ननु कामयन्ते ॥

77 जगद्गुरुस्सेवितसङ्गमेशो व्यसर्जायद्गाङ्गजले मृदं ¹ ताम् ।
पुराऽभिगुप्तं भरतोऽधिराज्यं यथाप्रतिज्ञं रघुपुङ्गवे इव ॥

---

1 Nizam State and people 2 Maharaja Kishan Prasad Bahadur
3 Welcome address to His Holiness was presented in the three languages in Sanskrit, Marathi and Tamil

78 स्वयं कराभ्यां स हि दीप्ततेजाः पवित्रगङ्गाजलमाददानः ।
व्यमादिवाग्निर्धृतरामदारःकृतार्थभावांश्च चकार शिष्यान् ॥

79 सहस्रशो जाग्रति शिष्यवर्गे स्वलङ्कृते मण्डपमध्यदेशे ।
यथावदाराधितवेद[2] वादी दधार मासांश्चतुरो व्रताग्र्यम्[3] ॥

80 चतुर्षु पक्षेषु विधाय विद्वत्सदस्सु वाक्यार्थविचारधाराम् ।
यथार्ह माराधितपण्डितानां पुरो गुरुः प्रास्तुत घोषयात्राम् ॥

81 प्रमुख्यकाशीजनगाढयाच्ञा तपोनिधिस्सादरमादधानः ।
अयात्प्रयागाङ्गतोगुरुस्सन् लघूकरिष्यन्कलिदोषमारात् ॥

82 सपूर्णकुंभप्रमुखोपहारं मालव्यकाशीनृपपण्डितैस्सः ।
यतिव्रजैः पौरजनैश्च भव्यैर्दिवीव साक्षाद्गुरुरभ्युपेये ॥

83 दृशा च कैश्चिन्मनसा च कैश्चित् धनेन कैश्चिद्वचसा च कैश्चित् ।
अमोदि पात्रीकरणाद्गुरोस्तैः स्वयं च पात्रीभवनात्कृपायाः ॥

84 निषेव्य काशीपुरविश्वनाथं तथाऽन्नपूर्णामितरांश्च देवान् ।
यथाक्रमं दुण्ढिविनायकादीन् ननन्द नित्यं गुरुसार्वभौमः ॥

85 क्षणेऽपि लब्धे गुरुदर्शनार्थं रसेन सौभाग्यममानि तत्र ।
तदा जनानामितरप्रवृत्तिस्तदन्तरा मन्दतरा बभूव ॥

86 महागुरुःप्रास्तुत शारदायाः स शक्तिपीठे नवरात्रपूजाम्[4] ।
बहुप्रकारैर्जपहोमकार्यैः तदैव पीठं हि बभूव शाक्तम् ॥

87 महानवम्यां कनकान्नवस्त्रैस्सतीशतानामथ कन्यकानाम् ।
विशेषपूजाविधिरद्भुताय बभूव काशीपुरसज्जनानाम् ॥

88 अधिकृतजपहोमैस्तत्त्वं मानयित्वा ह्यवभृथमपि गङ्गास्नानतो मानयित्वा ।
द्विजगणमुपचारैर्मानयित्वा यथार्हं गुरुवरकरुणा सा माननीया विभाति ॥

इति जगद्गुरुश्रीचन्द्रशेखरेन्द्रसरस्वतीविजयमहाकाव्ये अष्टमस्सर्गः

---

1 The Sand was collected during October 1922 near the Sethumadhava temple and the same was immersed now on 25th July 1934 by H H Mahaswamigal 2 Sri Sage Vedavyasa 3 Chaturmasyam
4 The Sarada Navaratri may be celebrated in the holy city of Kasi

श्रीः

# नवम स्सर्गः ॥

1 एकैकमुत्कृष्टमुदारमुज्ज्वलं काश्यामकस्मादपि गच्छतां सताम् ।
तीर्थाटनैकव्यवसायधर्मिणः कालं कियन्तश्चिदचूचुरद्गुरोः ॥

2 [1] मालव्यकाशीनृपगुप्तवर्त्मनः धर्मोपदेशाख्यकलासुशिल्पिनः ।
श्रीकामकोटीमठधामरत्निनः कालः कलायां निममज्ज निर्भरम् ॥

3 वाराणसीविश्वकलालयस्थितास्ते माणवाध्यापकसेवकाः कृताः ।
धन्या नवोन्मेषविलासभास्वराः स्वराज्यमाप्येव गुरूपदेशतः ॥

4 घट्टा मठाश्शास्त्रविमर्शशालका इत्यादरात्प्रत्यहमाप्तभाजनाः ।
श्रीकामकोटीशकटाक्षभाविताः काशीपुरे केऽपि न शेषितास्तदा ॥

5 पर्यायतः पण्डितमण्डलीकृतप्रत्यायनादेशमहाधिरोहात् ।
काञ्चीमठस्सद्गुरुपुङ्गवाश्रितः श्रीशाङ्करं पीठमगण्यतोत्तमम् ॥

6 सद्यस्सदाधर्मपथोद्यतानुगः श्रीचन्द्रचूडेन्द्रसरस्वतीमहान् ।
पाट्नेति नूत्नैर्विदितं महत्पुरं प्रत्यागमे पाटलिपुत्रमाययौ ॥

7 गङ्गातटोल्लासिनि तत्पुरे गुरोर्भक्त्या जयन्तीं समघोषयन्मुदा ।
कल्याणकृन्नच्छति दुर्गतिं नहीत्युद्बोधयन्विश्वजनान् जगद्गुरुः ॥

8 श्रीगण्डकीतीर्थमतङ्गतीर्थयोस्तीरोल्लसत्क्षेत्रपथा गयामयात् ।
तत्रत्यमाचार्यवरप्रतिष्ठितं श्रीशैवलिङ्गं प्रणनाम दण्डतः ॥

9 [2] बीहार संस्थानविभूषणायितं श्रीवैद्यनाथाख्यमगाज्जगद्गुरुः ।
क्षेत्रं तदा क्षेत्रजपण्डितैर्मुदा प्रत्युद्गतः स्वागतवाचनादिभि. ॥

10 तत्रत्यपण्डाप्रमुखैः प्रचालितं प्राचीनविद्यालयमीयिवानसौ ।
स्वायंभुवं लिङ्गमुदारदर्शनं सानन्दमम्बां गिरिजामवन्दत ॥

---

1 Pandit Madan Mohan Malaviya
2 Bihar Samsthanam
3 A famous temple town in Bihar state

11 मध्येप्रयाणं कृतकल्कताश्रयं [1] श्रीव्यासपूजातिथिनिश्चयं गुरोः ।
नोपारुधत्तत्र किमप्यतर्कितं लोकोत्तराणां किमिवास्ति बाधकम् ॥
12 [2] वङ्गा महाराष्ट्रकलिङ्गगुर्जराः कर्णाटकान्ध्रद्रविडाश्च केरलाः ।
संभूय सर्वेऽप्यधिकल्कतापुरं लोकैकवन्द्यं ह्युपतस्थिरे गुरुम् ॥
13 संभावितव्यासमहर्षिपूजनो वाक्यार्थसम्मेलनसंहिताशयः ।
वर्षो [3] युवाऽऽसी द्बल्लाडिवादृतः नासौ तु तुर्याश्रमसंयमोज्वलः ॥
14 वैदेहसौराष्ट्रविदग्धमैथिलास्सम्मानिताः कालिसुघट्टमागताः ।
मासैश्चतुर्भिर्व्रतपालनोद्यते पूज्ये गुरौ दर्शितभक्तिभावनाः ॥
15 काल्या [4] महामन्दिरमागते गुरौ जीवोपहारे [5] कृतवादमत्सरम् ।
वर्गद्वयं संभ्रममावहत्परं सत्याग्रहोत्साहिमनस्विनां हठात् ॥
16 शास्त्रेषु वामाचरणे प्रतीष्यते जीवोपहारो बलि-नामसंभृतः ।
दातुः प्रदेयस्य च भद्रमेव चेज्जीवस्य हिंसेति कुतोऽवसीयते? ॥
17 श्रद्धा यदि प्राणिवधापहारणे नित्यं च सर्वत्र च सा विशिष्यते ।
किं वा न रुन्धन्त्यशनार्थघातुकान्सूनासु नित्यं शतशो दयालवः ॥
18 इत्थं स्वकीयं मतमञ्जसा गुरुः प्राकाशयच्छान्तमना दयानिधिः ।
सर्वेषु भूतेषु च साम्यदर्शनम्- अद्वैतमाद्यं मतमीरयन्निव ॥
19 निस्तारिते मासचतुष्कसंयमे गौडद्विजान्पण्डितमण्डलीवरान् ।
[6] पञ्चाननानन्तसुकृष्णशास्त्रिणस्संभावयामास महागुरुस्तदा ॥
20 दुर्गासमाराधनशीलमादरादारब्धदेवीनवरात्रपूजने ।
आचार्यवर्ये शतघोपकारकं रेजे समग्रं ननु गौडमण्डलम् ॥

---

1 Calcutta City
2 Bangal, Maharashtra, Orissa, Gujarat, Karnataka, Andhra, Tamilnadu Kerala people
3 The year named Yuva also Youthful
4 Temple of Kali at Calcutta
5 Offering of animals to Kali
6 Mahamahopadhyaya Panchanana and Tarkaratna on N S Ananthakrishna Sastri

21 क्न्यापुरन्ध्रीप्रतिवारपूजनैस्सहस्रचण्डीजपहोमतर्पणैः ।
काल्या हि घट्टं स्वयमात्तदेविकारूपेण तेने गुरुणाऽन्वितार्थकम् ॥

22 [1]आख्यातवृत्ताः बहवो बहुश्रुता यात्रास्थले तत्र हि कल्कतापुरे ।
सेवावकाशं जगतीगुरोरगुर्नाम्ना तु ते नोल्लिखिताः पुनर्नवाः ॥

23 स्वां जैत्रयात्रामनुषञ्जयंस्ततस्तीर्त्वा तु [2] नद्यौ द्रुतबाष्प [3] नौकया ।
भक्तेषु साकेतभवेष्विवातरद्रामो विषण्णेषु महागुरुस्तदा ॥

24 श्रीशक्तिपीठान्यतमेति विश्रुतां श्रीताम्रलिप्तिं पदधूलिलेपनात् ।
सम्मानयामास च धूसरां सतीं तां गौतमीयामिव राघवो गुरुः ॥

25 [4]'मिड्नापुरं स्वामिवरैः प्रसाद्यता'मित्यादरप्रार्थनयाऽऽतुराञ्जनान् ।
उत्साहशीलान्विवशान्प्रशासकैस्संवर्धयामास च यात्रया गुरुः ॥

26 संरम्भसम्पादितसं विधानकं नानाप्रकारैरुपरञ्जितान्तरम् ।
आचार्यवर्याय हि कौतुकाञ्चितं मिड्नापुरे स्वागतमाचचक्षिरे ॥

27 भक्तिप्रसक्त्या मतदेशयोस्तदा नित्यानुषक्ताः कुलपुत्रकाश्शतम् ।
कारासु बद्धा अपि तीव्रशासकैर्भक्त्या गुरोर्दर्शनभाग्यमावहन् ॥

28 प्रायाद्गुरुः [5] कारकपूरितीरितं कर्मान्तिभूयिष्ठविशालपत्तनम् ।
यद्दाक्षिणात्याः कलमा इवावनिं पुष्णन्ति वृत्तिस्वरसैः प्रवर्तनैः ।

29 आसीत्तु टाटानगरं ततः परं गन्तव्यमास्तिक्यखनिस्थलं गुरोः ।
कार्ष्णायसोत्पादनयन्त्रशालकं बाभासते यत्र चिराय भारते ॥

---

1 Pandit Panchanana Tarakaratna
Sri Manmathanath Mukharji, Chief Judge, Calcutta High Court, Sri Dvarakanath Misra, Saratchandra Bose, Burdwn Maharaja and others
2 River Damodar and Rupnarayan 3 Steam Boat 4 Midnapur
5 Karagpur-Industriaal town

30 सद्यो मठीया भृशमामयार्दिताश्शैत्येन साङ्घातिकरोगकारणैः ।
मासैकवासे बहुधा प्रसादिताः प्रेम्णा च भक्त्या सुहृदाप्तबान्धवैः ॥
31 प्रातर्धनुर्मास इति प्रवर्तिता सायं प्रदोषश्शुभ इत्यनुष्ठिता ।
पूजा महास्वामिमठालये तदा कोलाहलं भक्तजनान्व्यभावयत् ॥
32 देवालयैस्सूक्ष्मकलाविभावकैरुद्भासितं [1] जाजपुरं गुरुर्ययौ ।
पारेशतंचोत्कलभू [2] द्विजन्मनामध्यास्त यत्पूर्वकुलं प्रयाजिनाम् ॥
33 यत्रोत्तरं वैतरणी विसर्पिणी पुण्येन संयौत्यपरेव जाह्नवी ।
स्फीतस्वरूपा इह सप्त मातृकाः कुर्वन्ति रक्षां परितो दिगन्तरम् ॥
34 आचार्यवर्यस्तदुपेत्य सादरं देवान् सिषेवे त्वधिजाजपत्तनम् ।
विद्याधरेशाय [3] ददौ महागुरुर्धेनुं सवत्सां च दुकूलयुग्मकम् ॥
35 कट्टाकतस्तद्भुवनेश्वरं [4] गतस्संसेव्यमानो विदुषां गणैस्ततः ।
आघोषयञ्छङ्करसद्गुरूत्सवं गोवर्धनं पीठमलञ्चकार च ॥
36 [5] पुर्यां जगन्नाथमुखांश्च देवान्सौवर्णपुष्पाञ्चितमालिकार्पणात् ।
आसेवताऽध्यास्त च संयमीश्वरस्सभद्रपीठं ननु मुक्तिमण्डपे ॥
37 श्रीशङ्करस्यादिमसद्गुरोर्मठे पर्यायतः प्राप्ततदाधिपत्यकाः ।
आचार्यवर्या ह्युपवेष्टुमीशते तत्पीठमित्यस्ति महीयसी प्रथा! ॥
38 श्रीकामकोटीशवरः प्रसाधयन्नभ्यर्थितो मङ्गलपीठमादरात् ।
अद्वैतविद्यालयमाणवांश्च तान्सामोदमाशीर्वचनैर्व्यवर्धयत् ॥
39 [6] बर्हाम्पुरं श्रीचरणोऽथ जग्मिवान्व्यासर्षिपूजां महनीयवैभवाम् ।
तत्राचरन्मासचतुष्कसंयमैः रेजे प्रशान्तो हविषेव पावकः ॥

---

1 Jajpur, Calcutta Dt
2 Orissa State
3 Sri Vidyasdharapati, a respected pandit (Panda) in Jajpur
4 Bhuvaneswar
5 Puri-Jagannath
6 Barhampur

40 आन्ध्रेषु [1] कूर्माख्यपुरे महागुरुं संसेवमानं हरिमञ्जसा जनाः ।
साक्षादुपेतं शिवमेव मेनिरे सद्यः प्रकामं दधिरे कृतार्थताम् ॥
41 गोदावरीपावितमण्डलान्तरेष्वान्ध्रप्रदेशेष्वतिरम्यखेटकान् ।
एकैकशः पादरजःपवित्रितान्प्रायो विधातुं गुरुणा मनो दधे ॥
42 नैसर्गिकं वागमृतं गरिष्ठिता कारुण्यमश्रान्तमनोबलं दमः ॥
औदार्यमात्माश्रयता च साधनान्यान्ध्राग्रहाराननुगृह्णतो गुरोः ॥
43 देवालयाः पर्वतकन्दरालयाः स्रोतस्विनीनिर्झरकाननानि च ।
उन्मीलयन्त्युत्सुकतां तपस्विनोऽप्यान्ध्रानुदृष्टानि कुतो न कालिकीम् ॥
44 गोदावरीतीरभुवं क्रमादटन् कृष्णातटं स्वामिवरोऽप्युपासदत् ।
भीमापुरे [2] वार्षिकशङ्करोत्सवं स्थित्यै तु लोकस्य चचार सद्गुरुः ॥
45 तेनालि [3] मार्गेण गुरूद्वहस्ततो गुण्टूर्पुरं [4] पण्डितमण्डलाकरम् ।
संभावितव्यासमहर्षिपूजया चक्रे बृहन्मासचतुष्कदीक्षया ॥
46 सम्मानिताशेषविपश्चिदुत्तमः पीठाधिपो [5] मार्गपुराख्यपत्तने ।
आराध्य दुर्गां नवरात्रमुत्सवैस्सूक्तैश्च धर्मानशिषज्जनान्प्रति ॥
47 नेल्लूरमागत्य महाजनार्थितो मासत्रयं तत्र वसन्महागुरुः ।
कोडूरतोऽल्लाडिपुरं [8] व्यतीत्य च श्रीकालहस्तीश [9] मुपाययौ जवात् ॥
48 श्री [10] वेङ्कटाद्रावुपसेव्य तत्पतिं कोवूर- [11] बुक्का- [12] तणिका चलाध्वना [13] ।
काञ्ची समेयाय गुरूत्तमः क्रमात्सप्ताहमध्ये च चिदम्बरं पुरम् ॥
49 आहाय रामेश्वरमागतो गुरुःकल्ये समाप्याह्निकमात्मसंभृतैः ।
श्रीरामनाथं सहरुद्रकीर्तनं गङ्गाम्बुभिस्सोऽभिषिषे च सादरम् ॥

---

1 Kurma Kshetram — 2 Bhimavaram — 3 Tenali town
4 Guntur — 5 Margapur — 6 Nellur
7 Kodur — 8 Alladi village — 9 Kalahasthi
10 Tirupati — 11 Kovur — 12 Bugga
13 Tiruttani

50 वाराणसीतीर्थगतागतक्रमं निर्विघ्नमापूरितमात्मना स्मरन् ।
प्राप्तपरां निर्वृतिमुद्धवायितो मौनव्रतं चानुससार सिद्धये ॥

51 तद्वार्षिकव्यासमहर्षिपूजने सङ्कल्पितं हीत्यभिकुंभकोणकम् ।
प्रस्थाय मध्येपथमाचितोत्सवं पृथ्वीपतिं [1] सेतु पमभ्यवर्धयत् ॥

52 श्रीमत्पुदुक्कोट्टपुरे श [2] मानितः प्रासेलया तङ्गुडि [3] सन्निधिर्गुरुः ।
सद्यो ववन्दे परमेष्ठिदेशिकान्प्राप्ते महाश्रेयसि केन तृप्यते ॥

53 श्रीमातृभूतं त्रिशिरःपुरीश्वरं श्रीजम्बुकेशं निखिलाण्डनायिकाम् ।
श्रीरङ्गनाथं च जगद्गुरुर्महान् संसेवमानः प्रययौ मठालयम् ॥

54 आषाढमासीयकवेरजापयःपूरायिता भक्तजनास्ससंभ्रमाः ।
आनिन्युरन्योन्यकृतावलम्बना वादित्रवेदादिरवैर्मठालयम् ॥

55 [4] "प्रासाद कृष्णार्यधनाढ्यकल्पिते विश्रान्त्यगारे [5] प्रतियात्रमार्जितम् ।
पूर्वाधिकं पुण्यफलं जगद्गुरोः पादार्पणात्तत्कुलजाः प्रपेदिरे ॥

56 कलिमलकलुषाणां शान्तिदानैकदक्षे
सुकृतनिकररक्षादीक्षितानां प्रतीक्षे ।
भुवनगुरुवर श्रीकामकोटीशबद्धे
भरतभुवि सुभद्रं पादुकेसदधाताम् ॥

इति श्रीचन्द्रशेखरेन्द्रसरस्वतीविजयमहाकाव्ये नवमस्सर्गः

---

1 Ramanathapuram Raja Sethupati
2 Pudukkottai
3 Ilayattangudi
4 "Aramana' Krishna Iyer, Sourastra
5 Guest House

श्रीः

# दशमस्सर्गः

1 शुभेतरापकृतिपूर्वमात्मना निर्व्याजमारब्धमहापदानतः ।
जनस्य सौभाग्यपरम्पराऽऽग्रहास्ते केऽपि लोकोत्तरकीर्तिशालिनः ॥
2 अथोपदेष्टुं जगतीं प्रगल्भवाग्वेदोक्तधर्माचरणं महानयम् ।
वसन्प्रवर्ग्ये घटकोणमण्डले मुद्राधिकारिक्रममादि शन्[1] मठात् ॥
3 पुराणपाठं परिरक्षणं गवां शुद्धिप्रतीक्षां प्रतिदेवमन्दिरम् ।
सदैव पूर्ताचरणं च साधयेन्मुद्राधिकारी मठसेवकाग्रणीः ॥
4 नियोगमेवं प्रथितं विधित्सुना तञ्जापुरे च त्रिशिरःपुरेऽटता ।
हिताय नस्सद्गुरुणाऽतिवाहितं वर्षत्रयं कार्यवशात्तिरोहितम् ॥
5 तदन्तरेऽव्यग्रमना जगद्गुरुः श्रीव्यासपूजां[2] तुवरंगुरूच्चये ।
समाचरन्मासचतुष्कसंयमं क्षेमाय लोकस्य रराज संयमी ॥
6 पुनर्नवीकृत्य चिराय कारुभिर्बङ्गारु[3] कामाक्षिवरालयं मुदा ।
तञ्जापुरान्तर्गुरुणा गरीयसा कुम्भाभिषेकाय दिनं च निश्चितम् ॥
7 विषौ वृषे मासि तिथौ च शोभने तेजोमयस्यास्य गुरोश्च सन्निधौ ।
महाजनानां निवहे महीयसि प्रावर्त्यतानन्दजलाभिषेचनम् ॥
8 जने महायुद्धभियाऽतिदुःखिते क्षेमाय लोकस्य जगद्गुरुःस्वयम् ।
सहस्रनामस्तवरुद्रसूक्तकैः प्रतिक्रियां शान्तिकरीमुपादिशत् ॥
9 महागुरुर्वेङ्कटशैलभूपतेः[4] याच्ञामपेक्ष्याऽऽश्रितपूवनूर्पुरः ।
ततान यज्ञं महनीयवैभवं-एकादशाहस्स्वतिरुद्रसंज्ञम् ॥
10 मनोहराखण्डकवेरजातटे नत्ता[5] ग्रहारेऽर्चितवेदशोधकः[6] ।
[7]व्रतानुषङ्गादतिरुद्रयज्ञकं- आचार्यवर्यःपुनराचचार य ॥

---

1 Mudradhikari project
2 Tuvarankuruchhi, a small village near Tiruchi
3 Bangaru Kamakshi amman Temple, Tanjore
4 Rajah of Venkatagiri near Chittore, Andhra State
5 Natham Village near Musiri
6 Vedavyasa
7 Chaturmasyavrata

11. अखण्डकावेरितटान्तरागतान्ग्रामान्स्वसञ्चारपवित्रितान्तरान् ।
विधाय वेदागमरक्षणातुरः श्रीजम्बुकेशे मठधाम संययौ ॥
12 पुराणमाहेश्वर [1] भालयं तदा श्रीराजराजेश्वरनामकं पुनः ।
परिष्कृतं चारचयद्यतीश्वरः कुम्भाभिषेकं विधिना व्यधत्त च ॥
13 अनन्तरं प्रस्तुतयात्रया पुनःश्रीकुंभकोणं गुरुणा व्यगाह्यत ।
कथासु किंचित्परिवर्तनेच्छुना पूर्वोपक्लृप्तांश इवार्थवादिना ॥
14 कुतः परेषां हितमाचरन्व्रती तूष्णीमुदास्ते निजकर्मणःक्षणम्? ।
जगद्धितायाचरितुं जगद्गुरुःकाञ्चीमयासीत्कुलदैवतोत्सवम् ॥
15 पुरा [2] चतु ष्षष्टितमाधिपैःकृतं कामाक्षिकामन्दिरकुम्भसेचनम् ।
तदेव सम्प्रत्यनघाशयेन सद्गुर्वग्रगण्येन विधीयतेतराम् ॥
16 स्वभानुसंवत्सरतैषमासिके शुभे दिने मङ्गलकुंभसेचनम् ।
कामाक्षिकामन्दिरमण्डलान्तरे सम्पादयामास गुरूद्वहो महान् ॥
17 ये निर्निमेषाः कलशाभिषेचनं कामाक्षिकाया गुरुणा प्रसाधितम् ।
विलोकयामासुरमी कृतार्थतां सहस्रशो भक्तजना. प्रपेदिरे ॥
18 स्थानान्तरं प्रापितया स्वया खिले तत्स्वर्णकामाक्षिपदे तु पादुके ।
जगत्प्रसिद्धादिमसद्गुरोरधादमोघकल्याणकृते यतीश्वरः ॥
19 ततोऽन्यदा प्रस्तुतदिग्जयाटने काञ्चीपुरात्काञ्चनतेजसि स्थिरे ।
गुरावुपेयुस्सुखमेश यन्पुरे [3] श्रीव्यासपूजामनुतिष्ठति प्रजाः ॥
20 गुरुः प्रतस्थे पुनरु त्तरार्कटं [4] सम्पूरयन्मासचतुष्कसंयमम् ।
प्रपद्य साक्षादरुणाचलेश्वरं ज्योतिश्च संसेव्य गिरौ व्यराजत ॥
21 ततः प्रयाणोन्मुख एव सञ्चरन् [5] शेङ्गपथा [6] सेलमु पासदद्गुरुः ।
यथावदापादितसत्क्रियादिकं भूम्नाऽभ्यनन्दत्करुणाकटाक्षत. ॥

---

1 Old Siva Temple called Sri Rajarajeswaram

2 Renovation and consecration etc were performed by H H 64th Sankaracharya of Kanchi kamakoti Matt

3 Yasayanur near Chittor 4 North Arcot 5 Sengam,
6 Selam

22 स कुंभकोणं सपरिच्छदोऽप्यगान्महामखस्नानकृतत्वरःक्षणात् [1] ।
आसादित्तानघं सुतीर्थसेवनःस्वायंभुवानन्दमविन्दतानघः ॥
23 अनेककाञ्चीमठधर्मसेवकानेकीकृतानादिशदार्तरक्षकः [2] ।
जगद्गुरुःकार्यमनन्तरक्षणे काले क्रिया कामदुधा हि सर्वदा ॥
24 प्रदाय भस्माक्षतकुङ्कुमादिकानार्तांश्च रुग्णांश्च चिकित्सकालये ।
प्रसान्त्वयाऽऽधेहि मुरारिकीर्तनं सर्वेभ्य एवास्त्विदमेव भेषजम् ॥
25 सनातनं धर्म मशेषमानवानाख्याहि कालत्रितयेऽपि रक्षकम् ।
परेशनामानि समुच्चरान्तिके ह्यासन्नमृत्योरिदमस्तु भूतये ॥
26 इतीदमन्यच्च मठीयसेवकान्प्रत्येकमादिश्य [2] सभामकल्पयत् ।
*कृपालवः प्राणभृतामुपायनं साहाय्यदानं स्वयमेव तन्वते !* ॥
27 प्रपूर्व [3] पीठाधिपरोपिताङ्कुरामद्वैतसिद्धान्तविकासनोद्यताम् ।
सभामनेके महनीयपण्डिताः स्वीयैस्सहायैश्च मठे व्यकासयन् ॥
28 तदीयहेमोत्सवमद्य [4] सन्निधौ श्री [5] चन्द्रचूडेन्द्रसरस्ववतीगुरोः ।
सवैभवं मानयितुं विपश्चितः प्रोत्सेहिरे शिष्यधनाढ्यसेवकैः ॥
29 दशस्वहस्सुप्रवरा हि पण्डिताः श्रीव्यासभाष्ये विशदार्थबोधनम् ।
स्मृतीतिहासेषु च धर्मचारिणो रात्रावुपन्यासमतानिषुः क्रमात् ॥
30 परश्शतं पण्डितसत्तमास्तदा स्वर्णाङ्गुलीयैर्गुरुबिम्बबिम्बितैः ।
दुकूलवासोभिरुदारचेतसा सम्मेनिरे सद्गुरुपुङ्गवेन ते ॥
31 *ततश्च तञ्जापुररम्यखेटकान्कांश्चित्प्रपूर्योत्तमधर्मयात्रया* ।
श्री [6] गर्भरक्षापुरसीम्नि सद्गुरुः श्रीव्यासपूजां निरवर्तयन्मुदा ॥

---

1 Mahamagham Tank at Kumbakonam
2 Jivatmakainkarya committee
3 H H Sri Chandrasekharaendra saraswathi swami the 66th Acharya, Kamakoti Peetha, established a big gathering of Advaitu's called Advaitha Sabha in 1894
4 Golden Jubilee of Advaita Sabha
5 Sri Sri Periaval
6 Tirukkarukavur near Kumbakonam

32 स्वधर्म[1] रक्षामणिसम्भृतोदयं काञ्च्यां विराजत्कमनीयमूर्तये ।
कामाक्षिकायै[2] रजताधिवाहनं इयेष कर्तुं जगतां गुरुर्महान् ॥
33 समाचितं रौप्यरथप्रवाहणं वीथी षु काञ्च्याः प्रथमावरोपितम् ।
स भक्तपौरप्रवरोपसेवितो दृष्ट्वा जनन्योपहितं जहर्ष च ॥
34 ततश्च मध्यार्जुनपालकम्पनी निर्वाहिकायत्तगृहोत्तमं स्वयम् ।
मठाय दत्तं गुरुराडपूपुरद्वर्षत्रयं भूरितपस्समाधिना ॥
35 आशीतिवर्षानधिभारतं धृतं वैदेशिकं राज्यमतोऽधरीकृताः ।
अस्मन्मताचारविधूननोन्मुखा भ्रान्ता इवासन्मलिनाशया जनाः ॥
36 कृपानिधिस्सोऽथ विषीदतां गुरुस्तत्तादृशीं दीनदशामपोहितुम् ।
श्रेयःप्रदं प्रापयितुं पदं पुनः कियन्ति कार्याणि महान्ति निर्ममे ॥
37 प्रबन्धवेदाध्ययनाद्यपेक्षया[4] पावैषडङ्गाध्ययनावबोधने ।
अशेषहिन्दूप्रत्यविरूढयौवने श्रेयःप्रदं सद्गुरुराडुपादिशत् ॥
38 गुरूपदेशस्स ससार रंहसा कूलङ्कषाषाढनदीप्रवाहवत् ।
आबालवृद्धं पठितुं प्रयेतिरे पावैप्रबन्धद्वयमादराज्जनाः ॥
39 मठेषु विद्यालयमन्दिरेषु च प्रत्यब्दमायोजितमेलनेषु च ।
परश्शतं माणवकाः प्रलेभिरे पावैद्वयाभ्यासपराःपुरस्क्रियाः ॥
40 "निरस्तभेदं शिवविष्णुनैष्ठिकानेकासनस्थानिव कुर्वतेऽनिशम् ।
गुरूत्तमायाऽस्तुनमःपरम्पराः भक्तिप्रणालीमुपचिन्वते नमः ॥ "
41 इति प्रगीतः परमो गुरुःक्रमादासाद्य शेम्मङ्गुडिमग्रहारकम्[5] ।
अमानयत्तत्रच शङ्करोत्सवं विस्मारिताशेषमहोत्सवोदयम् ॥
42 सरो(लो)ऽपि साक्षात्कृतसद्गुरुःस्फुटं स्यात्पुण्यशीलस्तदिदं निदर्शनम् ।
गुरोर्जयन्त्यां गुरुणा हि मानितान्शताधिकान्वेदविदः सरोऽकरोत् ॥

---

1 Sri Dharmarakshamani K. Balasubramanya Iyer, Madras.
2 Silver Car for Sri Kamakshi
3 Sri Balasubramanya Iyer, B G Paul & Co, Madras
4 Tiruppavai, Tiruvembavai, Tirumarai Aranga-Prachara committee
5 Semmangudi, a Village near Kumbakonam.

43 ततोऽग्रहारे मुडिकोण्डनाभिधे सीम्नद्धवेदोत्तरङ्गेसुराङ्किते ।
सद्यः प्रसीदन्निरवर्तयद्गुरुः श्रीव्यासपूजां च यतिव्रतं तथा ॥
44 स्वामी तुलामास्यतुलौघवैभवे स्वयं तपोध्यानपवित्रितान्तरः ।
धर्माय कावेर्युपसेवनेच्छया पुरं । मयूराख्यमुपाययाद्रुतम् ॥
45 श्रीकामकोटीवरपीठभूषणं यतीश्वरं सादरमाश्रिताश्रयम् ।
मायूरसीमान्तरवासिनो जनाः वर्षद्वयं भक्तिवशाद्विशिश्रियुः ॥
46 यतीश्वरश्शङ्करसञ्जयन्तिकामुद्घोषयन्नो2 षुहुचेरिखेटके ।
शनैरयासीत्सरसीव सारसः प्रधानकेन्द्रं ह्युधिकाञ्चि भास्वरम् ॥
47 महीयसाऽऽराधनमार्षशेवधेः काञ्च्यामिदंपूर्वतयाऽनुवर्तितम् ।
चतुर्षु मासेषु धृतं यतिव्रतं सन्न्यासिनामप्युपदेशतां गतम् ॥
48 मठेतथान्यत्र च शिष्यसज्जनाः मौनव्रतासक्तहृदो जगद्गुरोः ।
तुष्टचै निदेशाद्बहवो वशंवदाः 3 श्रुत्यन्तपारायणमाचरंस्तदा ॥
49 यथानिदेशं महनीयवैष्णवोऽप्यण्णङ्गराचार्य इति प्रतीतः ।
यदाचरत्सारविचारर्वकं श्रुत्यन्तपाठं तदभून्मुदे गुरोः ॥
50 भक्तानथान्तेवसतश्च नागरान्विद्यासु वृद्धान्प्रमुखान्महाजनान् ।
नियोगमागन्तुमुपाहरद्गुरुर्विचारयन्श्रीमठवृद्धिमायतौ ॥
51 समेऽप्यसामान्यकुतूहलेन त ह्यज्ञातवृत्तास्सहसा समाययुः ।
सकौतुकं कारणमत्र सद्गुरोरामन्त्रणस्यानुपदं चिचीषवः ॥
52 प्रणाममाज्ञापरिपालनं गुरोर्मुखारविन्दाच्छ्रवणं वचःश्रुतेः ।
भाग्याय मत्वा समयं तु साधवश्चकाङ्क्षिरे चातकसन्निभास्तदा ॥
53 समन्दहासं प्रतिनन्द्य सङ्गतं प्रत्येकमारात्कुशलं च पृच्छतः ।
जगद्गुरोः श्रीमुखदर्शनेन ते आत्मानमान्मन्यवशा विसस्मरुः ॥

1 Mayavaram or Mailaduthudai in Tanjore Dt
2 Ozluhuchen, a small villege near Kollidam river
3 Upanishads
4 Sriman Prativadibhayankaram Annagaracharya swami of chinnakanchipuram

54 अनन्तरं निश्चलभक्तयूथिकां विस्माययन्सस्मितमात्मनिश्चयम् ।
समाचचक्षे गुरुराडुपस्थिते पीठस्य निर्वाहकपर्यवेक्षणे ॥
55 "यथाविधि प्राप्त [1] कुलं गुणाकरं वेदे च धर्मे निरतं सुवर्चसम् ।
वरेण्य [2] नामानमुदग्रशाखिनं [3] ब्रह्मण्यनिष्ठं स्पृहणीयपाठवम् ॥
56 मठाधिपत्ये सुलभप्रवेशनं परावरज्ञं प्रथमं वटुव्रजे ॥
श्रीकामकोटीमठधामदेवताः कुर्वन्तु पात्रं मठधूःप्रवाहणे ॥"
57 इतीदमाश्चर्यमतर्कितं गुरोर्निशम्य सर्वे वचनं विलक्षणाः ।
परस्परालोकनिषण्ण शेकिरे वक्तुं किमप्यत्र विचक्षणा अपि ॥
58 "अकालिकीयं गुरुनाययोजने" त्याख्यातुमह्नाय न शेकुरास्तिकाः ।
परं तु "पश्चात्तु भविष्यतीति" ते सप्रश्रयं स्वाशयमूचुरिङ्गितैः ॥
59 प्रपूर्वपीठेशनियोगसङ्गतौ शौथिल्यनिर्देशपुरस्सरं महान् ।
तदैव पीठेऽभिनवेशितुर्वरं निर्वाचनायेत्यवदत्सविस्तरम् ॥
60 ततस्तमर्ध शिरसाऽभिन्ध तेह्यर्धं त मूर्ध्ना वचसा च सादरम् ।
ययाचिरे "पीठपतौ नियोजितेऽप्याध्यक्ष्यमङ्गीकृतमस्तु साध्विति ॥"
61 श्रीचम्पकारण्यनिवासिभूसुरश्रीमन्महादेवकुमारमुत्तमम् ।
कुमार [2] नामानमधीतबह्वृचं [6] गुणाकरं ते बहुमेनिरे मुदा ॥
62 मठीयवृत्तेष्वसमं महन्महस्सन्न्यासदीक्षाग्रहणं गुरूत्तमात् ।
य[.] कर्मयोगी विजयश्च [7] फाल्गुन मुहूर्तभावं स बभार वैभवे ॥
63 सहस्रशस्सम्मिलितेषु वैभवं द्रष्टुं प्रदेशाद्विदिशश्च साधुषु ।
काञ्ची कथञ्चित्स्खलितेव सम्भ्रमाच्चचाल किञ्चिच्चलिताध्वगा शनैः ॥
64 महागुरु प्राक्कलवाम्बिकापुरो प्रणम्य पूर्वान्कृतसन्निधीनपि ।
सर्वाश्च काञ्चीपुरदेवतास्ततो ननाम चाचार्यसुरेश्वरं मठे ॥

---

1 Reached Gurukula as well as had a noble family
2 Great name, the name Subrahmanya
3, Foremost Veda-Rigveda
4 Mannargudi' near Tanjore
5 Who has the name of Subrahmanya
6 Rgvedin 7 Victory, name of Arjuna and the Year Vijaya
8 Arjuna/the month Panguni

65 पूर्वाङ्गकर्माणि विधाय शास्त्रतस्समाप्य दीक्षानियमांश्च मण्डपे ।
कुमारनाम्ने वटवे गुरूत्तमस्सन्न्यासदीक्षां शुभदामकल्पयत् ॥
66 यावद्गुरुर्बालयतिश्च रेजतुस्सूर्येणचन्द्रेण समौ समे जनाः ।
अदृष्टपूर्वं प्रकृतं तु वैभवं समीक्ष्य तावज्जयघोषमुज्जगुः ॥
67 मेधाविभूत्योश्च जयश्रियश्चसत्पात्रं मठाग्रे यतिनं यवीयसम् ।
सरस्वतीयुक्तजयेन्द्रनामतः पितेव पुत्रं प्रजुहाव सद्गुरुः ॥
68 विद्यां विशुद्धां व्यवहारधोरणीं मठाधिपत्ये सरसं च पाटवम् ।
आधातुकामो गुरुसार्वभौमतां शिष्ये प्रवर्ग्ये मन आवहद्गुरुः ॥
69 काञ्चीमठे वर्षचतुष्टयं वसन्प्राध्यापकैर्बालयतीन्द्र आदरात् ।
यथावदध्यापितशास्त्रतल्लजः पुपोष गाम्भीर्यमिवार्णवो मणिम् ॥
70 प्रदेशभाषास्सरसप्रभाषणैः शास्त्रार्थसारान्विदुषां समागमैः ।
सुदृष्टिपातैस्सकलाःकला अपि क्रोडीचकाराभिनवो हि संयमी ॥
71 प्रसन्नहासं परिवीतलोचनं विश्रान्तकर्णं विमलाग्रनासिकम् ।
उदारहस्तं प्रपतत्पदाङ्गुलिं प्रापुःपदं लोकहितैषि सम्पदः ॥
72 अद्वैते विततेऽप्यबालधिषणो व्याख्यानवैशारदीं
साहित्ये सरसे दधौ च सदुपन्यासेषु यो नैपुणीम् ।
ऋग्वेदे प्रथमे तपोमतिमगाद्यश्चाभवत्सद्गुरोः
सच्छिष्यो जयताज्जयेन्द्रविदितः काञ्चीमठोद्यन्गुरुः ॥
73 आस्तिक्यानुगतं सनातनमतं संवर्धयन्सन्ततं
दीनानाथतरून्कटाक्षसलिलैस्सञ्जीवयन्नित्यशः ।
कारुण्यामृतवारिवाहवपुषा षष्टिं समानां तरन्
ऐश्वर्योपहितोऽप्यनुज्वलगतिःकाञ्चीमहानद्वयः ॥

इति श्रीचन्द्रशेखरेन्द्रविजयमहाकाव्ये दशमस्सर्गः ।

श्री

# एकादशस्सर्गः

1 प्रार्थितो मद्रवास्तव्यैरथ प्रायान्महागुरुः ।
जयेन्द्रानुगतो मद्रान् शिष्याणां भद्रवर्धनः ॥

2 हिन्दु [1] पत्राधिपागारे मध्येमार्ग स्थितौ क्षणम् ।
प्रतस्थाते ततो रात्रौ शिबिकायानसंस्थितौ ॥

3 वेदवादित्रनिर्घोषैर्जयघोषैश्च सेवितौ ॥
प्रापतुः संस्कृताध्स्थानमन्दिरं मयिलापुरे ॥

4 यत्र प्राध्यापकास्सर्वे माणवाः पौरसत्तमाः ।
स्वागतीचक्रुराचार्यौ सूर्याचन्द्रमसाविव ॥

5 कुत्रचिद्धयात्मना कुत्राप्यन्तेवासिवरेण च ।
तत्तदावासदेशेषु प्रीणयामास सज्जनान् ॥

6 सार्धैकवत्सरावासे व्याख्यानविशदीकृता. ।
तत्वार्थास्सद्गुरोरासन्सज्जनाप्यायनाय ते ॥

7 स्वर्णपुष्पमयं वर्ष भक्तैश्शिष्यैश्च साधितम् ।
लघु तदान्तरोल्लासादत्यशेत तदैन्द्रकम् ॥

8 सद्गुरोःकाञ्चनासार. कियांस्त्यागैकगन्धिन ।
आर्तार्तिप्रशमायैव सम्पत्ता सन्न्ययुज्यत ॥

9 'मां प्रतीयाय महानेष. प्रीत्याऽहं सद्गुरोर्मत. ।
धन्योऽस्मीति' मुदं प्राप्नोत्तदा मद्रपुरे जनः ॥

10 त्रापुषं मानुषं मन्ये तदा मद्रपुरे स्थितम् ।
आग्रहाग्रहयोस्तप्तं गुर्वाज्ञया-वंशवदम् ॥

---

1 'Farm House', house of Mr Srinivasan, the Editor and Publisher of the Hindu

2 Mylapore Sanskrit College, Madras

11 अहं पूर्वमहं पूर्वमित्यागन्तुजनाकुलम् ।
प्रस्थानमङ्गलाशंसि सदस्संयमिनोरभूत् ॥
12 श्रीकामकोटीपीठेशमद्रजानपदाश्रयम् ।
तदासीत्सङ्गतं राम-मैथिलयोरिवाद्भुतम् ॥
13 ततो मानगिरिं [1] प्राप्य समीपस्थं महागुरुः ।
वार्षिकव्यासपूजादीन् यथावन्निरवर्तयत् ॥
14 [2] नस्रत्पेट्टस्थली जाता विद्याकेन्द्रेण संस्कृता ।
महागुरोः प्रसादेन [3] वरदाख्यो महानभूत् ॥
15 श्रीकालकण्ठदेवस्य कुंभसेकमिषाद्गुरुः ।
ततोऽऽड्यप्पलग्रामे [4] सस्माराऽप्यय्य [5] यदीक्षितम् ॥
16 जम्बुकेशेऽखिलाण्डेश्या मण्डपे नवनिर्मिते ।
नवरात्र्युत्सवोत्कृष्टे गुरुश्चक्रेऽभिषेचनम् ॥
17 त्रिशिर·पुरमागत्य नूत्नपीठाधिपेन च ।
[6] देशी यसुकलाशालामध्यास्त गुरुसत्तमः ॥
18 कावेरीतीरजातेषु धमदिशं चरन्गुरुः ॥
काम [7] नायकपाल्याख्ये व्यधत्त व्यासपूजनम् ॥
19 अयासीत्कुम्भकोणं द्रागाचार्येण यवीयसा ।
यत्र शिष्याग्रणीपौराःप्रतीक्षांचक्रुरुत्तमम् ॥
20 'गुरुस्साभिनवाचार्यो महानायाति सानुगः' ॥
इत्यौत्सुक्यात्पुराग्रण्य· स्वागतेनोपतस्थिरे ॥
21 नीत्वा दिनानि पञ्चैव श्रीमठे स्वास्थ्यहेतुना ।
प्रस्थाय च पुनः प्रायादिलयात्तङ्गुडिं गुरुः ।
22 परमेष्ठिगुरून्नत्वा मधुरां प्रापदर्थितः ।
मासमेकमुवासाऽत्र भक्तानुग्रहकाङ्क्षया ॥

---

1 Managiri A village near Poondamalli, Madras
2 Nazarathpet, Madras-Bangalore road.
3 Late Thiru Varadarajan, a land lord, pilanthropist and devotee of Mahaperiaval 4 Adayappalam, near Kanchipuram
5 Great Appaya Dikshita, Philopher and author of one hundred works in sanskrit 6 National College, Trichy
7 Kamanayakanpalayam, Trichy Dt.

23 इलयात्तङ्कुडिं पुण्यं पूर्वचार्यनिषेवितम् ।
भूयोऽप्युपाययौ साकं जयेन्द्रेण महागुरुः ॥
24 शिष्याचार्यानुयातेन वर्षद्वयं निवासिना ।
गुरुणाऽनुष्ठितं तत्र व्यासपूजा[1] व्रतादिकम् ॥
25 व्यास[2] भारतशिल्पाना मागमस्यापि वैभवम् ।
समाजे प्रकटीकर्तुमियेष श्रीकलानिधिः ॥
26 लुप्तप्रायाःकला एताः ज्ञातारोऽपि सुदुर्लभाः ।
अदृष्टाश्रुतपूर्वा तत्सभां स्वामी समाभरत् ॥
27 तद्द्वारा भारतस्यास्य संस्कृतिः पालिता भवेत् ।
इत्याशयेन विज्ञानां सद उन्नीयते पुरः ॥
28 अज्ञातज्ञापनं काले हिताय जगतां गुरोः ।
आहूतास्सदसे प्राज्ञा बहुधाऽस्तोषताऽऽस्तिकाः ॥
29 इलयात्तङ्कुडिग्रामो लघीयानुत्तमायितः ।
गुरुणाऽनुत्तमेनाऽप्यासहस्रं पण्डितोत्तमैः ॥
30 तञ्जापुरीमधिष्ठात्री[3] स्वर्णकामाक्षिका गुरोः ।
निध्यायत पुरःप्रादुर्बभूव स्वार्थसिद्धये ॥
31 अतीता विंशतिर्वर्षास्तत्र कुम्भाभिषेकतः ।
पुनरुद्धारकर्मान्ते निश्चितं कुम्भसेचनम् ॥
32 विशिष्य शिष्यवर्यस्य जयेन्द्रस्यापि सन्निधौ ।
वरिवस्यां प्रवर्त्स्यन्ती प्रत्यैक्षिष्ट महागुरुः ॥
33 तदुत्सवोपसंहारे रामेश्वरयियासया ।
पुस्फुरतुः पदे किंचित्सद्गुरोर्धर्मसेविनः ॥

1 Chathurmasya Vrata
2 Vyasabharatha-Purana-Agama-Silpa sadas
3 Bangaru Kamakshi, Tanjavur

34 अग्नितीर्थेऽब्धितीरस्थे [1] प्रोत्तुङ्गे मण्डपान्तरे ।
सशिष्यभगवत्पाद-बिम्बं प्रोच्चं प्रतिष्ठितम् ॥
35 स्नातोत्थिता जना यद्वत्पुण्यदर्शमनमाप्नुयु. ।
इत्येतदर्थमाचार्यःकल्पयामास संविधाम् ॥
36 जानुदघ्ने जले तिष्ठन्नाचार्योऽन्वग्रहीच्चिरम् ।
श्रीजयेन्द्रकृतारम्भं कुम्भाभिषेकमङ्गलम् ॥
37 दक्षिणाम्नायपीठस्य क्षेत्रं रामेश्वरं स्मृतम् ॥
देवता श्रीवराहोऽत्र श्रीकामाक्षी शक्तिरीरिता ॥
38 काञ्च्यामुभे विराजेते स्मरणार्होऽयमाशयः ।
अतोऽत्र शाङ्करं चिह्नं रम्यं तच्छ्लाघ्यतेराम् ॥
39 गङ्गायात्रानुषङ्गेण धनुष्कोट्यां मृदाचिता ।
श्रीजयेन्द्रेण यत्तत्तु गुर्वाज्ञानुग्रहास्पदम् ॥
40 मासैकवासपूर्णात्मश्रीरामेश्वरवासिनाम् ।
आशासानः प्रभद्राणि प्रापत्स मधुरां गुरुः ॥
41 तत्र [2] राजन्महाभाग प्रार्पितं स्वागतं परम् ।
मानयन्मधुराभाषी मीनाक्षी पर्यसेवत ॥
42 कुंभाभिषेककर्माङ्गं विधास्यन्वेदवित्तमैः ॥
तत्रोवास कलाशाला [3] -भवने सानुगो गुरुः ॥
43 यथाविधि निरूढेन प्रशस्तेऽह्नि महामनाः ।
कुम्भाभिषेकपुण्येन योजयामास साधकान् ।
44 मीनाक्षी ह्लादयामास भक्तांश्चापि सहस्रशः ।
मीनायमानशिष्यांश्च स्वयं मातेव सद्गुरुः ॥

---

1 Aggnithirtha, a bathing Ghat at Sri Rameswaram.
2 Sri P T Rajan Renovation Committee Chairman Sri Meenakshi Temple, Madurai
3 Sri Rameswaram Devasthanam Pathasala

45 नारायणपुरे [1] रम्ये नेदिष्ठग्रामधामनि ।
व्यासपूजां च निर्वर्त्य प्रारेभे यतिनां [2] व्रतम् ॥

46 व्यासभारतशिल्पादि-सम्मेलनं द्वितीयकम् ।
प्राचालयद्यथापूर्व तत्रैवाऽऽषड्दिनं महान् ॥

47 ततो व्यतीत्य योगीन्द्रस्त्वरसा त्रिशिरःपुरीम् ।
महालिङ्गेश्वरक्षेत्रं मध्यार्जुनं [3] समासदत् ॥

48 अत्रैव भगवत्पादेष्वानते ष्वालये विभोः ।
"अद्वैतमेव सत्य"मित्यासीद्वाणी त्रिरुच्चकैः ॥

49 इतीमं स्मरणार्ह [4] तत्सिद्धान्तं स्मारयेत्कथम् ?॥
उचितं तद्विधातव्यं यद्धि स्वामिवरेप्सितम् ॥

50 तत्रत्यश्रीमठागारचन्द्रशालाविमानेके ।
साभीतिहस्तमीशानं प्रातिष्ठिपत्तपोनिधिः ॥

51 आचार्यपादुके चापि प्रतिष्ठाप्याभ्यषेचयत् ।
पर्याप्तं किं न्विदं तस्य विशालमनसो गुरो ? ॥

52 और्णवस्त्रैस्सुवर्णाभैरष्टोत्तरशतैश्शुभैः ।
अचार्यपादुकेऽभ्यर्च्य वेदान्तबुधसाद्व्यधात् ॥

53 आद्यशङ्करसम्बद्धान्मुख्यव्यतिकरांशकान् ।
भित्तावालेखयद्वर्णैः स्वामी सत्वगुणाकरः ।

54 ततश्चिदम्बरातीतः काञ्चीं सम्प्राप्य सद्गुरुः ।
षड्वर्षानन्तरं भूय. श्रीमठं प्रात्यपद्यत ॥

55 श्रीमठाभ्यन्तरे श्लक्ष्णैः श्वेताश्मभिस्सुरूपिताम् ।
सशिष्याद्यगुरोर्मूर्तिं मण्डपे प्रत्यतिष्ठिपत् ॥

---

1 Narayanapuram, a Village near Madurai
2 Chaturmasya Vratam
3 Thiruvidaimarudur near Kumbakonam
4 Compound Word
5 Great Sankarabhagavatpada

56 सभैमरय्यशान्ति स्वं सप्तत्यब्दोत्सवं गुरुः ।
काञ्च्या अदूरे विनाऽऽघोषं सम्मेने चाम्बिकापुरे ॥
57 व्यासभारतशिल्पादि सम्मेलनं तृतीयकम् ।
यतिव्रतोपसंहारे काञ्च्यामाकारयद्व्रती ॥
58 राज्यपालस्सामराजःश्रीभक्तवत्सलादयः ॥
भागभाजो वभूवुस्तेऽप्यन्ये शैवमठाधिपाः ॥
59 ततो मद्रपुरीं प्राप्य सर्वविदविदां सभाम् ।
आवाह्य चादरौत्सुक्ये पौरैराकारयद्गुरुः ॥
60 काट्टुपल्लीलघुग्रामे मद्रप्रान्ते मनोहरे ।
व्यधात्सादरमाचार्यो व्यासपूजादिवैभवम् ॥
61 कालहस्तीश्वरं नत्वा जयेन्द्रेण सहाग्रहीत् ।
श्रीवेङ्कटकृपाभाग्यं सहस्रकलशैर्महान् ॥
62 तिरुच्चानूरधिष्ठानां पद्मावतीं न्यषेवत ।
कालहस्तीश्वरक्षेत्रे व्यतानीद्व्यासपूजनम् ॥
63 चातुर्मास्यव्रतारम्भे पञ्चमं चाधिवेशनम् ।
व्यासभारतशिल्पानां प्रारेभे सप्तवासरैः ॥
64 रङ्गस्थले नटेशस्य बभार महतीं प्रथाम् ।
सम्मोलनं समुत्साहै रान्ध्रराज्याधिकारिणाम् ॥
65 तिरुप्पतिस्थलोल्लासिवेङ्कटेश्वरवल्लभाम् ।
पद्मावती प्रसूमारादादरात्प्रणनाम च ॥
66 वेदशास्त्रसभाऽऽधारान्नैकान्देवस्वनेतृभिः ।
प्रचालितान्सदारम्भानुच्चैराघोषयद्गुरु. ॥
67 महानन्दीस्थलेराजत् वैराजं लिङ्गमानमत् ।
विज्ञानशेवधीनां तद्ब्रह्मर्षीणामुपायनम् ॥

68 पीठारोहस्मृतौ हेतुं वज्राख्यं वैभवं गुरोः
लोकक्षेमं च सङ्कल्प्य ह्यान्ध्रभक्ताः प्रयेतिरे ॥
69 शतचण्डीहवो देव्या यत्तदानन्दवर्धनम् ।
इत्यादरादुपाजह्रुर्देव्या हवनमुत्तमम् ॥
70 क्षेत्रेष्वाचार्यवर्यस्य प्रीतिपात्रेष्वपश्चिमम् ।
श्रीशैलं भगवत्पादै र्यत्प्रायेण मनोधृतम् ॥
71 कर्नूल्पथा समासाद्य श्रीशैलं मल्लिकार्जुनम् ।
भ्रमराम्बां च संसेव्य योगी शान्तिमविन्दत ॥
72 रेपाल्वंश्या सुजाताम्बा धन्या सा शङ्करायनम् ।
देशे प्रख्यापयामास यथास्वामिमनोरथम् ॥
73 तदीयधनसाहाय्यात् निर्निनिर्मिते नूत्नमण्डपे ।
सशिष्यभगवत्पादप्रतिमां पादुके तथा॥
74 श्रीनर्तनगणेशानं यतीशः प्रत्यनिष्ठिपत् ।
कुम्भाभिषेकसंस्कारं चाचालयत्प्रसन्नधीः ॥
75 जयेन्द्रानुगत. काञ्चीमाजगामामलाशयः ।
प्रवासादिव साकेतं पुरा रामो जगद्गुरुः ॥
76 अध्यास्त पर्णशालां च सर्वतीर्थसरस्तटे ।
नववर्षानिनैषीच्च ह्यनासक्तःपुरेऽपि सन् ॥
77 व्यासपूजां यथापूर्व सशिष्यः सोऽन्ववर्तत ।
जयेन्द्रं भारते यात्रां कर्तुमाज्ञापयद्गुरु ॥
78 चिदम्बरे नटेशस्य स्त्रोत्रस्वर्णवर्मणा ।
प्रसाध्य कुञ्चितं पादं जयेन्द्रः प्रार्थनामधात् ॥
79 यात्रार्थ निर्गते तस्मिञ्जयेन्द्रे चोत्तरापथे ।
आत्मारामः क्षणेनेव महान्मयामासानयापयत् ॥
कार्वेटनगरे कांश्चिच्छिवास्थाने च कांश्चन ।
मासान्विद्रावयन्नासीद्व्यासपूजाप्रतीक्षया ॥
80 दिल्लीहरिद्वारपथा जयेन्द्रो वाराणसी प्राप्य महीयकेन्द्र ।
श्रीकामकोटीशमुपासमानः सम्प्राप काले कलवाग्रहारम् ॥

इति श्रीचन्द्रशेखरेन्द्रविजयकाव्ये
एकादशस्सर्ग

श्री

# द्वादशस्सर्गः ॥

1 भक्तया जनैरथ कृतं ह्यतिरुद्रहोमं
संसेव्य चोत्तमहवं शतचण्डिकाख्यम् ।
सम्मानयन्नियतिसिद्धशताभिषेकं
धर्मानुपार्जयदसौ गुरुसार्व भौम. ॥
2 कामाक्षिकालयवरान्तरसीमशोभे
श्रीशङ्कराभगवत्पदसन्निधाने ।
साधारणेऽपि [1] सविशेषविधिप्रकारं
श्रीव्यासपूजनमधात्सहशिष्यवर्य [2] ॥
3 आसन्नवार्षिकयतिव्रत[3]पालनार्थ
वेदोक्तधर्मनियमाचरणार्थमेव ।
पूज्ये गुरावभिगते शिवयोरुदारं
आस्थानमास्त च जयेन्द्रगुरुस्तु काञ्च्याम् ॥
4 अत्रान्तरेऽधिगतपीठधुरो जयेन्द्र
प्रस्थाय नैजपरिवारयुतोऽधिसेलम् ।
निर्वत्य वेदविद [4] धीशमहर्षिपूजा
अन्ते [5] व्रतस्य समियाय च रामसेतुम् ॥
5 पूज्यो महागुरुनन्तरकालयुक्तौ
भक्तानुगै परिमितैस्सह पादयात्राम् ।

1 General Observance, the year Sadharana
2 Mahaperiaval s disciple Acharya Sri Jayendraswami
3 Charturmasyavrata
4 Vedavyasa
5 Chaturmasya

प्रारभ्य पूर्वमभियान्प्रथितान्ध्रदेशं
प्रापन्महाहगरि[1] नामक मग्रहारम् ॥

6 मध्येपथं त्रिचतुरांश्चरता मुहूर्तान्
विश्रम्य किंचिदहुरेकमथ द्वयं वा ।
भूयो गताञ्जनपदेषु यतीन्द्रवर्यान्
सच्चक्रिरे प्रतिपदं बहुशो हि भक्ताः ॥

7 सन्दूरमागतमदूरभवं मुनीन्द्रं
चाराध्य तन्नगरपाल उवाह पुण्यम् ।
द्वाविंशति गुरुवरोह्यतिवाह्य चाह्नां
हम्पीपुरं प्रतिजगाम चरित्रमुख्यम् ॥

8 पम्पासरश्शबरिकाश्रम - ऋश्यमूका-
द्याश्चर्यदं तदितिहासवरप्रसिद्धम् ।
शीर्णावशिष्टमनुपालितदृश्यखण्डं
साक्षात्कृतं गुरुवरेण तदादरेण ॥

9 प्राचीनशासकमहोदयचिह्नमारात्
अन्यद्विशीर्णदृषदुच्चयमात्रशेषम् ।
साक्षात्कृतं विवशतामनयत्प्रगाढं
तावद्विरक्तमपि योगिवरान्तरङ्गम् ॥

10 विद्यावनेश्वरमठाधिपमागतं तं
ह्यार्तमतीव न चिराद्धत भागधेयाम् ।

---

1 Hagari, a small village in the Andhrapradesh
2 Sandur, a princely state of Andhra
3 Ramayanam
4 Sage Sri Vidyaranyaswami
5 Vidyaranyamatham
6 Prime Ministership

तामिन्दिरां [1] च विनतामुपशान्तिवाक्यै-
राश्वासयन्गुरुवरश्चिरमुल्ललास ॥
11 साम्राज्यशिल्पि [2] मुनिनाऽऽदिगुरूत्तमैर्वा [3]
यद्यच्च लोकहितमाचितमानिवृत्ति ।
यात्रास्थलेष्वनुपमो गुरुसार्वभौमः
संस्मार्य तत्तदधुनाऽभ्युदयाय चक्रे ॥
12 आत्मोन्नतोऽवितुमथातुर-वेद-धर्मान्
स्थानोन्नतिं न हि चकाङ्क्ष गुरूत्तमोऽसौ ।
लोकोत्तरास्सततमार्तिहरा जनानां
औपाधिकं न खलु किंचिदुपाश्रयन्ते! ॥
13 कर्णाटकाननुपदं परिवर्तमाने
सोत्साहमुत्तमगुरौ समघोषयंस्ते ।
हूब्लीपुरे [4] हि षडशीतितमां जयन्ती
धार्वाडपत्तनजनैस्सह पौरमुख्याः ॥
14 बेल्ग्राममद्भुत [5] तपोनिधिमभ्युपेतं
व्यासार्चनोत्तरयतिव्रतनिष्ठितं तम् ।
आबालवृद्धमभिजातपुराग्रगण्याः
संसेव्य निर्वृतिमवापुरिवाधमर्णाः ॥

---

1 Sri Indira Gandhi (before she became the Prime Minister of India for Second time)
2 Pujya Sri Vidyaranya, Minister of Vijayanagar Kingdom
3 Adi Sankarabhagavatpada
4 Hubli City
5 Belgam

15 सम्पादयन्करुणया स्वकटाक्षवर्षं
दीनेषु साग्रहमवग्रहधूननेच्छुः ।
दूरादनाप्तमिव वर्जितमब्दवृष्ट्या
कालाद्गहो: [1] करडिगुद्दिमवाप धीर : ॥
16 आसेदुषः परिमितानुचरस्य तस्य
ग्रामोपशल्यमवितर्कितमुत्तमस्य ।
पादार्पणात्तुपदमेव सुदृष्टदोषा
सद्य:पपात महती विकलेव वृष्टिः ॥
17 'कोऽयं प्रभाव'इति विस्मयमोदसिक्ता
भक्तास्तदा किमपि वक्तुममुं त्वशक्ताः ।
साष्टाङ्गपातमवशास्सहसा प्रणेमुः
साक्षात्कृतं स्वकुलदैवतमेव मत्वा ॥
18 तोष्ठूय्यमानगुण एव समेत्य सद्यो
ग्रामान्तरं गुरुवरो नवरात्रपूजाम् ।
निर्वत्य 'सादरमितः प्रतियास्यमान-
साकेतराम इव साधुजनैर्न्यवारि ॥
19 सन्यासिधर्ममनुबोद्धय महाजनांस्तान्
आश्वासयन्कथमपि प्रवरो गुरूणाम् ।
बादामि [2] पत्तनमुपेत्य गुहासु दृष्टं
चालूक्यवश्यनिभृतं प्रशशंस शिल्पम् ॥
20 सुश्लिष्टदेवगृहमण्डलवास्तु [3] विद्या-
नैपुण्यमाकलयतः परितोऽग्नि [4] तीर्थम् ।

---

1 Karadiguddi, a town in the Karnataka State
2 Badami a city of Karnataka
3 Architecture
4 Agnithirtha near Virupaksha temple

नेत्रद्वयं सुविशदं समभूत्प्रफुल्लं
तस्यैव निर्वृतिवशात्स्वरसप्रशान्तम् ॥

21 आरात्सुमङ्गलमयीं वरसिंहरूढां
आनन्दसुन्दरमुखीं यमिना वरेण्यः ।
होशैलवंश्यकुलदैवतमम्बिकां तां
अस्तोष्ट चाशु वनशङ्करिनामधेयाम्॥

22 कर्णाटराज्यमपहातुमनिच्छयेव
वायव्य [1] सौम्यगर [2] कुर्दमुदारशोभम् ।
अध्यास्य पत्तनमसीमकृपाप्रवाहो
देवं [3] महान्तमनिशं गुरुराडुपास्त ॥

23 'निष्कामकर्म च महेश्वरभक्तिरिद्धा
सान्निध्यमुद्गमयतः परमस्य पुंसः ।
इत्यादिशन्गुरुवरो जनताममोघै
राशीर्भिरार्द्रहृदये महतां व्यभासीत् ॥

24 प्रस्थास्यमानगुरुपुङ्गव मुन्मनस्काः
ग्रामान्तमाग्रहवशादनुवव्रजुर्ये ।
आयोध्यकाननुग्रतानिव रामभद्रः॥
तान्सानुकम्पमखिलान्गुरुराडरौत्सीत् ॥

25 ध्यानान्तरोन्मिषदिवान्तररोचिरार्द्र
राष्ट्रे महत्यविकलं वद्दुच्चलक्ष्यम् ।
श्रीकामकोटि वरपीठजुषो यतीन्दोः-
प्राभासि मीरजपुरं४ चरतः पुरस्तात् ॥

---

1 North West region
2 Ugarkhurd
3 Mahadeva, the presiding deity of the place
4 Miraj City Town in the Pune-Bangaore line

26 यावद्यतीन्द्ररणद्वयमद्वयाङ्क
निक्षिप्यते स्म भुवि मीरजसीम्नि तावत् ।
सेठजी स [1] बालकिषण प्रमुखश्च कद्रे-
नामा च सार्धमितरै गुरुमभ्ययाताम् ॥
27 आध्यास्य सद्गुरुवरो गणपत्यगार [2]
सम्मानिता जनगणैर्बहुधोपचारै ।
आनन्दयन्प्रतिदिन विदुषोविचारै
आशीर्भिरातुजनान्यवसच्छताहम् ॥
28 आयात्तत कतिपयैर्दिवसैस्सतार [3]
लीलाविहारसदृश नगर रमाया ।
यत्रैव शाङ्करमठ पठितृन्विधत्ते
न्यायेऽप्यृचा पथि च सार्थकसार्थवाहान् ॥
29 हम्पीपुरे शिथिलराज्यधरानिवेश
साक्षात्कृतो मनसि खातनिभो यतिन्द्रम् ।
विद्या [4] वनेशमुनिपुङ्गवस प्रभाव-
प्रख्यापक किमपि कर्तुमचोदयत्तम् ॥
30 सन्दूर [5] राज्ययुवराजधुरीणताया
अण्णादुरार्य [6] सहयोगयुत यतीन्द्र ।
राज [7] र्षिनामविदित च सवेदपाठ
वेदान्तपाठनिलय विदधे विशालम् ॥
31 [8] होस्पेट्पुरे गुरुकुलादृतवर्त्मना सा
विद्योतते सपरिवारसुपाठशाला ।
कन्येव कालकृतदोहदपोषवेपा
चान्द्रीप्रभेव परिवृद्धकलाविशेषा ।

---

1 Balakishan saitji Prof Kadre
2 Mahaganapathi Temple in the Miraj town
3 Satara town
4 Sri vidyaranya Muni
5 The Prince of sandur state
6 Sri Annadurai Iyengar
7 Royal sage Vidyaranya
8 Hospat town

32 राजर्षिराज्यभरणाङ्कनतत्पराणां
उट्टङ्कितानुतशिलातल [1] लेखनानाम्
ताम्रे च संस्कृतवचोमयशासनानां
निक्षेप [2] मूलमकरोद्यतिराट् प्राकाशाम् ॥
33 निक्षेपधूर्वहसभापतिसभ्यवर्याः
शीर्षे निधाय गुरुनाथनियोगमारात् ।
राजर्षिकालिकशितलताम्रपट्टो-
त्कीर्णानि निन्युरुपसद्गुरु मुद्रितानि ॥
34 वर्षत्रयेण महतो हि यथानिदेशं
[3] शामण्णनामविदितेन सतारपुर्याम् ।
क्षेत्रे तदुत्तरचिदम्बरनामभाजि
प्रावर्ध्यताऽपि नटराजविलासधाम ॥
35 नेदिष्ठ [4] राज्य-धनिकैस्समुपाहृतेन
प्रस्तावितं प्रचुरवस्तुधनादरेण ।
आसीत्तदेकपरिणाहविशेषवर्ज
क्षेत्रं समानमतिरम्यतदादिधाम्ना ॥
36 प्रेम्णा जनैरभिनवो [5] गुरुरित्युदीत-
श्रीकामकोटिमठशासकसन्निधाने ।
प्रावर्त्यतास्य गुरुनाथनियोगयोगात्
कुंभाभिषेकविधिरुत्तममन्दिरस्य ॥
37 अत्रापि दीक्षितवरा हि यथानियोगं
नित्यार्चनं नियतपर्वमहोत्सवांश्च ।
पर्यायतः प्रसृतरीतिमुपाश्रयन्त-
श्रीमन्दिरे विदधते नटराजराजः ॥

---

1 Epigraphy 2 Trust
3 Sri Samanna, a stamach devotee of Sri Mahaperiaval, at Satara
4 Andhra, Karnataka, Tamilnadu and Maharashtra states
5 Sri Pudu Periaval

38 अन्तेवसंश्च महनीयजगद्गुरोस्सः
श्रीकामकोटिवरपीठपतिर्जयेन्द्रः ।
व्यासार्चनं तदनु मासचतुष्कदीक्षां
साकं जगद्गुरुवरेण दधौ सतारे ॥

39 आचार्यशिष्ययतिनोरितरेतरार्थे
काचिन्नवा हि सुषमा प्रबभूव सिद्धा ।
धर्मार्जने परहिताचरणे च दीप्ता
नूत्नेव पार्वणविधोर्नियतिप्रक्लृप्ता ॥

40 आराधनात्परममुन्दतपःपराणां
प्राचीनपीठसरणौ गुरुसत्तमानाम् ।
पण्डर्पुराभिमुखतां [2] महति प्रपन्ने
प्रायाज्जयेन्द्रगुरुराड्विजयार्थयात्राम् ॥

41 यद्यप्यधीरजनता बहुशो [3] महान्तं
धर्मे च तीव्रकिरणोत्किरमंशुमन्तम् ।
अन्वीक्ष्य वारणपराऽप्यफला बभूव
स्वामी महाननुससार च पादयात्राम् ॥

42 'आश्चर्यमद्भुतमिदं कियदित्यकस्मात्'
ग्रामीणसाधुजनता विललासभूम्ना ।
सूर्यातपेऽप्यसमदुस्तरमार्गसीद-
द्योगीश्वरे करुणया वरुणो ववर्ष!.॥

43 पण्डर्पुराभिजनतोषमसीमवृद्धं
वर्षप्रवाहमिव भावयतां महिम्नाम् ।
मूर्तिं तपस्विनममंसत कल्पवृक्षं
य`केचिदेव दिविषत्प्रमुखा ध्रुवं ते! ॥

---

1 Pandarpur in the Maharashtra border
2&3 Sri Mahaperiaval

44 श्रीविठ्ठलेशमनुभाव्यकृपाप्रकाशं
श्रीत्र्यम्बकेशमनुकूलमहाप्रदोषम् ।
आसेव्य संयमिवरोऽनुसवं दिनानां
षष्टिं ¹ शतं च समहीन्नन् चन्द्रभागाम् ॥

45 तत्रत्यमाध्वमतवेदकलालये स्वं
आवासमारचयता गुरुणा गुरूणाम् ।
श्रीव्यासपूजनमहाव्रततीर्थसेवाः
धर्माय शाश्वतसुखाय समाश्रियन्त! ॥

46 षोलापुरे च तुलजापुरमार्गगेषु
विश्राम्य रम्यनगरेषु च खेटकेषु ।
कर्णाटकेषु समुपेत्य महान्महागाँव्-²
ग्रामं तदा कतिपयान्दिवसानुवास ॥

47 आचार्यपादमुपनम्य तदैकवारं
राजीवगान्धि ³ रनुगच्छति ⁴ गुण्डुरावे ।
सामोदमाशिषममोघमुपासमान.
स स्वीचकार नवभारतसृष्टिकर्ता ॥

48 पञ्चाशदुत्तर ⁵ शतद्वितयाहररूढं
वास च तन्नगरवासिजनानुकूलम् ।
धर्मे निलीनमपरत्र निनीषयेव
प्रावर्ततैव गुरुराट् निजपादयात्राम् ॥

49 ⁶ गुल्बर्गमार्गगतजानपदोत्सवार्थ
काल कियन्तमपि यापयति स्म यावत् ।
तावत्तदान्ध्रनगरं कुतुकात्तु ⁷ कस्तु-
र्पल्लीति विश्रुतमधाद्यतिराट् प्रतीक्षाम् ॥

---

1 160 days
2 Mahagaon a village on the borders of Karnataka
3 Mr Rajive Gandhi, the Prime Minister of India
4 Mr Gundu Rao Chief Minister of Karnataka
5 250 days 6 Gulbarga 7 Kasturpalli

50 तादात्विकान्ध्रसचिवो[1] रामरामराव:
प्रत्युद्गमादिबहुमानपुरस्सरं स: ।
सुस्वागतं नगरतोरण एव कुर्वन्
गुर्वाशिषां पदमभूल्लघुपुण्यमूलम् ॥
51 अत्रान्तरे गुरुवरं विनयादनंसीत्
कश्चिद्युवा व्रतसमार्जितवेदविद्य: ।
[2] एकोनसप्ततितमाधिपतित्वमुद्रां
पीठे जयेन्द्रगुरुकल्पनया दधान: ॥
52 श्रीकामकोटिवरपीठतपोविवर्त
सद्ब्रह्मचारिणमिदंप्रथमोपदृष्टम् ।
नारायणानुगतशङ्करनामधेयं
आत्मानमेव यतिराडुदयाय मेने ॥
53 आचार्यपादपरमाशिषमादधानो
वर्णी विनेयपदमुच्चतमाधिपत्ये ।
श्रीमज्जयेन्द्रगुरुणा समयोजि साक्षात्
वाग्देवतेव रमया हि शुभे मुहूर्ते ॥
54 सन्न्यासदीक्षितमुदारगुणाकरं तं
राकाशशाङ्कमधुराकृतिमाश्रमस्थम् ।
श्रीशङ्करं च विजयेन्द्रसरस्वती च
नाम्नोपघोष्य च जयेन्द्रगुरुर्जहर्ष ॥
55 ऐन्द्रावतीपरिसरोल्लसदग्रहारं
[3] कल्लूरमीयुषि गुरावुपकर्णलूनम्[4] ।
काञ्चीमठेऽभिनवबालकसंयमीन्द्र.
तत्राजगाम परमात्स्वगुरुन्दिदृक्षु: ॥

---

1 Sri N T Rama Rao, Chief Minister of Andhra.
2 69th Pithadipathi designate
3 Kallur, a village near Karnul, Andhra. 4 Karnul.

56 पीठाधिपेन गुरुणाऽपि जयेन्द्रनाम्ना
यावद्दिनैः कतिपयैर्व्रत सन्न्यधायि ।
तावत्रिरात्रमुदभूच्छुभसूचिवर्ष
सम्मेलनादिव तदा महतां त्रयाणाम् ॥

57 पुण्याहसूचकमुदारमनन्यलभ्यं
सम्मेलनं त्रिमहसामिव सद्गुरूणाम् ।
आनन्दमन्थरमुदञ्चितधन्यभावा-
स्सम्मेनिरे नगरवासिजनास्समेऽपि ॥

58 सन्न्यासिभिस्त्रिचतुरैस्सह [1] शिष्यवर्यैः
व्यासर्षिपूजनमधादसमप्रकर्षम् ।
स्वामी महानभरच्चतुरोऽपि मासान्
निर्वाणदीप इव शान्तमना व्रताग्र्यम् ॥

59 यद्यप्यसाध्यमिव सद्गुरुसन्निधानं
भूयोऽप्यधिद्रमिडदेशममन्यताऽरात् ।
आसीत्तथाप्युनुनयैर्विनयैश्च साध्यं
शिष्याग्रणीद्वयकृतैश्शतशोऽनुकूलम् ॥

60 'आयास्यतीति' मधुमस्मितमत्युदारं
श्रुत्वैव वाक्यमधरीकृतवाग्विकल्पाः ।
भक्तास्समासत चातकतुल्यवृत्ताः
कालं पचेलिममधीरमुदीक्षमाणा ॥

61 प्राप्ते त्वनेहसि सुपूज्यगुरावुपेते
सीमानमस्मदुपमण्डलशासकीयाः ।
[2] काङ्ग्रसनेतृ- [3] सचिवादय आदरात्तं
सुस्वागतन महनीयमुपासत द्राक् ॥

---

1 H H Sri Jayendra Saraswathi and H H Sankaravijayendra Saraswathi 2 Tamilnadu Congress Committee president Thiru G K Muppanar 3 Hon Minister R M Veerappan and Sundararajan and others

62 सा सावधानमुचिते समये समेतैः
राज्याधिकारि नगरप्रमुखैः प्रणीता।
सत्कारसन्ततिरपास्तसमस्तराग-
द्वेषे गुरौ हि समभूदुपचारमात्रम् ॥

63 सद्यस्समेत्य गुरुराट् कलवाग्रहारं
आराध्य पूर्वगुरुवैभवलक्ष्मवृन्दाम् ।
संयाप्य तत्र कतिचिद्दिवसान्प्रशान्त.
काञ्चीमयादभिनवोदितवत्सरादौ ॥

64 भक्तास्तदा पपुरुदर्चिषमश्रुपूर्णः
वाद्यानि तधमुरपरे जुघुषुर्जयादीन् ।
शुक्लाम्बरा द्विजवराः फलपुष्पहस्ता.
श्रेष्ठाय चक्रुरितरे गुरवेऽग्रपूजाम् ॥

65 निस्सेव्यसेवकमगण्य कुमारवृद्धं
दुर्ज्ञेयवैमतविचारमबाध्यबाधम् ।
काञ्चीपुर सकुतुक विललास सद्यो
व्यत्यस्तवास्तविकरीतिविधानभेदम् ॥

66 क्वेयं स्थिता चतुरशीतितमायुरास्था
क्वेय चतुश्शतपरद्विसहस्रमीलम् ।
यात्रा च सा त्रिचतुरेषु पदा प्रदेशे-
ष्वाचार्यसाधितमिदं बहुधाऽस्तुवंस्ते ॥

67 पक्वायुषा कृशतमेन कथं च षट्सु
वर्षेषु तावदतिदूरपदप्रयाणम् ।
शक्य जितेन्द्रियतयाऽतिमानुषाद्वा
धर्माद्दृते सविभवाद्विति सत्यमूचु ॥

68 यात्रानिवृत्तमुपमेयसुवृत्तमीष-
त्क्लान्तं च कान्तमुखमार्द्रकृपायताक्षम् ।
शश्वज्जनास्समुपसृत्य कटाक्षलाभा
त्सम्मेनिरे निजजनिं कृतकृत्यदीप्ताम् ॥
69 काञ्चीमठः पुनरनादृतदुर्गतानां
आर्ता वशा बल विकारि रुजातुराणाम् ।
आश्वासकेन्द्रमपुन.परिवर्तनार्हं
पूर्वाधिकं भवदुवाह जनप्रवाहम् ॥
70 ध्यानेन शान्तिमपवारितबाह्यवृत्ताः
येकेचिदाप्तुमनसो ग्रधुना विदेश्याः ।
योगीन्द्रसन्निधिवशाऽपनीतरौद्रं
रम्यं तु तं विवृणते मठसन्निवेशम् ॥
71 विद्वद्भिराप्तसुमनोभिरुदारपौरैः
राज्याधिकारि सचिवैः प्रमुखैश्च साकम् ।
तत्तत्समन्वितमभीप्सितमादधान·
आलापमार्द्रहृतयो गुरुरास शान्त. ॥
72 भक्त्याऽऽनतेषु किरन्करुणाकटाक्षं
धर्मांश्च शाश्वतसुखाय महानभाषीत् ।
तेष्वादिमो निधिनियोजनमुत्तमाङ्कं
तञ्जापुरीयबृहदीश्वरपूजनाय ॥
73 काञ्चीपुरान्तर निराश्रय-शैवलिङ्गो-
द्धाराय चार्थिकसहायनियोजनाख्यम् ।
दीपावलीसमयसंभृतनूत्नवस्त्रै-
र्लिङ्गार्चनाय निधियोजनमन्यदेकम् ॥
74 राजेन्द्रचोलनृपनिर्मितमन्दिरान्तः
गङ्गाधरेश्वरमहाशिवलिङ्गपूजाम् ।
अन्नाभिषेकविधिमाश्विनपूर्णमायां
प्रत्येकमाचरितुमार्थिकसाह्यमन्यत् ॥

75 देवालयेषु शिवविष्णुसमर्चकानां
पूजारिनामकगणालयसेवकानाम् ।
आर्थार्थिनामवशतामपनेतुमेकं
निक्षेपयोजनमुदारधानाढ्यनाथम् ॥

76 काञ्चीमठान्तरविभागविराजमानान्
विघ्नेश्वराऽऽदिभगवत्पदविग्रहादीन् ।
नित्याज्यदीपविधिना परिसेवितुं
निक्षेपकल्पनमधाद्गुरुसार्वभौमः ॥

77 साप्ताहिकेऽषु गुरुवारसदस्सु शास्त्र-
प्रज्ञामुपोद्बलयितुं, विदुषश्च विद्याः ।
संरक्षितुं, निधिनियोजनमादरार्ह
प्राचालयद्गुरुवरोऽनुपमापदानः ॥

78 प्रान्तीयगोपुरचतुष्टयवत्सु तत्त-
द्देवालयेषु कुलदैवततोषणार्थम् ।
कृष्णीय-याजुष-जटापठनाय चान्य-
न्निक्षेपयोजनमकारि कुरूत्तमेन ॥

79 [1] कावेरिपाक्क- [2] सुपुटार्जुनशैवधाम्नी
श्रीद्वारकास्थशिवमन्दिरमप्युपदारः ।
उद्धर्तुमात्मतपसां फलभूतमेक
बिर्लामहोदयसनाथमधान्नियोगम् ॥

80 एकाम्रनाथ-वरदालयपुण्यकोटी-
वीथीविमानपरिशोधन-कुम्भसेकैः ।
आधातुमीशकरुणावरुणावतारं
योगीश्वरोऽन्यनिधियोजनपुण्यमाधात् ॥

---

1 Kavenpakkam, North Arcot Dt
2 Thiruppudaimarudur, Tirunelveli Dt

81 सम्मान्यराष्ट्रपतिमन्त्रिवरास्सभेयाः
न्यायाधिपा. प्रथित देशविदेशदूताः ।
लामाश्च धार्मिकमठालयदेशिकाश्च
प्रापुः परां मुदमवाप्तगुरुप्रसादाः ॥

82 (श्रीवेङ्क१टारमण - शेष२-नरेन्द३विष्णु-
श्रीचन्द्र४शेखर-चवा५णतुला६श्च भी७ष्मः ।
अध्वा८नि-शङ्क९रदयालमहोदया च
राजीव१०गान्धिरपरो नर११सिंहरावः ॥

83 ग्रीस्देशराजमहिषी च नृपा१२लराज्ञी
सा ग्वालियर्जनपदाश्रयराजमाता ।
श्रीकामकोटिगुरुदेवमुपासतैवं
ये के चनाधुनिराष्ट्रभूतां वरेण्या. ॥)

84 पीठाधिपाभिनवसंयमिनो र्नियोगात्
अस्मद्गुरूत्तमशताब्दमहाजयन्तीम् ।
वर्षैकसीमितविधानविशेषयुक्तां
आतेनिरेऽत्र च परत्र च शिष्यसङ्घाः ॥

---

1 Sri R.Venkataraman, Former President of India
2 Sri T N Seshan, Chief Election Commissioner of India
3 Sri Narendra Vishnu, Chief Minister
4 Sri Chandrasekar, Ex Prime Minister of India
5 Sri S B Chavan Union Minister
6 Sri Atal Bihari Vajapayee BJP
7 Sri Bhishma Narayan Sinha, Ex-Governor of Tamilnadu
8 Sri Adhvani
9 HE Sri Sankara Dayal Sarma, President of India
10 Sri Rajivgandhi Late Prime Minister of India
11 Sri P V Narasimha Rao, Prime Minsiter of India
12 Queen of Nepal

85 काञ्च्यामुदञ्चदतिरम्यमहा[1]लयान्तः
लक्षाधिकागतमहाजनसङ्घमध्ये ।
सर्वैश्रियायुतजयेन्द्रसरस्वती त-
च्छि[2]ष्यणीश्च कनकैर्गुरूपमासिचाताम् ॥

86 साक्षाददृष्ट वशत स्तमदृष्टपूर्व
आचार्यवर्यकलितं कनकाभिषेकम् ।
भाग्याय सन्ददृशुरार्द्र तदैकभावाः
भक्ताश्च भारतजनाश्च विदेशजाश्च ॥

87 राज्याधिकारिकृतमेकमिदं तु साह्यं
यद्दूर[3]दर्शनसुनामकयन्त्रवाह्यम् ।
दृश्यं न्विदं क्षितितलैकनिवासिलभ्यं
निर्णीतमित्यमिनिषेषु न नोऽवसादः! ॥

88 काञ्चीमठापवरकेऽभिनवे शयानं
वेत्रासने परिचरावतिजागरूकौ ।
शुश्रूषया च शिशुभावसमानरीत्या
क्षीणं मृणालवपुषं परिसान्त्वयेते ॥

89 काल· करोति परिणामविकल्पकल्पान्
न व्येति कस्यचिदपि क्रम एष रूढः ।
स्वामी महान्न सहते विफलाशमेकं
भक्तं तदाऽप्यसदृश. करुणाविवर्तः! ॥

---

1 Sri Kamakshiamman Temple, Kanchipuram.

2 H.H Sri Sankaravijayendra Saraswathi Swami

3 Dur Darshan.

90 जानाति भक्तगणमुन्नमिताननोऽसौ
स्मृत्वा स्वयं धरति हस्तमभीतिमुद्रम् ।
उत्स्मेरवक्त्रमपवृत्तमदीनतायै
सञ्ज्ञीकरोति कुतुकादिव भक्तमात्रे ॥

91 पीठाधिपाभिनवसंयमिनौ तदानीं
देहस्थितिं गुरुवरस्य परीक्षमाणौ ।
कुत्रापि किंचिदपवर्तनमप्ययन्तौ
सन्नाहतोऽवधृतिमाश्रयतः स्म नूनम्! ॥

92 ग्लानिं जगद्गुरुतनावतनुं तु दृष्ट्वा
कर्तव्यमाशु विवशा अपि ते मठीयाः ।
आतेनिरे विधिवदेव विदेहमुक्त्यै
कर्मश्रिया हि महतां महती विभूतिः ॥

93 पर्यन्तपूर इव सिन्धुजलस्य गन्तोः
कालानुगो गुरुवरः क्रमशः कृशीयन् ।
पूर्णोऽभवच्चिरमखण्डमहाविभूतौ
पूर्वं त्रिवादन[1]कलाद्वितयात्प्रशान्त्या ॥

94 ब्रह्मैक्यमाश्रितवता गुरुणा न्यधायि
[2]श्रीसम्मुखे धनुषि मन्ददिने स्वमुद्रा ।
यामामनन्ति च महाजनसार्थवाहा
श्रीचन्द्रशेखरशताब्दकिरीटकोटिम् ॥

95 कालप्रवाहगलितं गुरुरत्नखण्डं
श्रुत्वा दिगन्तगतभक्तजनप्रवाहः ।
काञ्चीपुरं गतमना प्लवते स्म सद्यो
निस्सारिताम्रसुखपेशलमापरेद्युः ॥

1 2 58 P M

2 The year Srimukha, the month Dhanush and the day was Manda-the Saturn

96 वेदप्रबन्धपठनैश्शुभसूक्तिपाठै
कृत्स्ना निशामखिलभक्तजना निदध्यु ।
मन्त्रिप्रधाननरसिंहमुखा वरेण्या ॥
श्रद्धाञ्जलि प्रयतवाङ्मनसा वितेनु ॥

97 अन्येद्युराचित्तविशेषसमर्हण तत्
वैकारिक यतिवरस्य शरीरमात्रम् ।
पीठाधिपाभिनवसयमिनोस्समक्ष
श्रीशेष एव विदधे भुवि गर्तगुप्तम् ॥

98 यस्तोर्ध्वमद्य विलसत्यतिरम्य मेक
बृन्दावन यतिवरस्मृतिरूपसौधे ।
काञ्चीमठे भवननैर्ऋतदिग्विभागे
श्रेय प्रद सकलभक्तमहाजनानाम् ॥

99 धर्मादिशैर्बहुना विविधहित स्वीयवृत्तेन भूम्ना
ब्रह्मीभूतस्सुसूक्ष्मो जयविजयशुभाख्यानवद्यया यतिभ्याम् ।
स्थूलोऽयास्ते महीयान्स्वकरकमलतो लब्धपुण्योदयाभ्या
वेदैश्शास्त्रैश्च धर्मैरधिभुवमविते र्भासमानो गुरुर्न ॥

100 जीयाच्छ्रीश्रीजयेन्द्रस्सततजयपरा स्वश्रिया सयुतेन
श्रीबालस्वामिनाऽपि स्वरसविजयिनाऽर्वाग्गुपेन्द्रायितेन ।
जीयादाचन्द्रतार प्रवरगुरुजनाम्रेडिता कीर्तिमाला
पूज्य श्रीचन्द्रचूडेन्द्रगुरु वरकृपापात्रमेषा भवन्ती ॥

ओ तत्सदिति वाक्योक्तौ
कीर्तिर्यस्याप्युदित्वरी ।
आस्ते प्रचोदयन्योऽन्त
प्रीयता स जगद्गुरु ॥

इति श्रीमत श्रीवत्सान्वय - जानकीशेषोपाध्यायसूनो वेदविदुष साहित्यभूषण - साहितीवल्लभ - सस्कृतसेवाधुरीणादिबिरुदालङ्कृतस्य अण्णामलैविश्वविद्यालये भूतपूर्वसस्कृतप्राचार्यस्य Dr श्रीनिवासशर्मण कृतौ जगद्गुरु - श्रीचन्द्रशेखरेन्द्रसरस्वतीविजयकाव्ये द्वादशस्सर्ग ॥

# Errata Slip

| Page No | Line. | Read | For |
|---|---|---|---|
| 3 | | | |
| प्रास्ताविकं | 8 | अष्टषष्टि | अष्टष्टि |
| 5. | 16 | नैकान्यप | नौकान्यप |
| 1 | 4. | प्रपञ्चात्म | प्रपञ्चत्म |
| 4 | 17. | पूर्वाश्रिमा | पूर्वश्रमा |
| 9 | 11 | सदणकुडीयः | स अणकुडीयः |
| 11 | 1 | पूर्वार्जिता | पूर्वार्जित |
| 11 | 17. | मयोजयिष्यत् | मयोयिष्यंत् |
| 11 | 23 | साक्षाद्बुधे | साक्षद्बुधे |
| 12 | 5 | यस्यास्तु | यस्यास्त, |
| 12 | 10 | परख्या | परभ्या |
| 16 | 23 | शेक्स्पीयस्या | शेक्स्पियरा |
| 18 | 6 | श्रुतास्ते । | श्रुतस्ते । |
| 20 | 3 | अद्वितीयः | अद्विवीयः |
| 21 | 19 | निर्वोढु | निर्वोदु |
| 22 | 21 | तद्रम | तद्राम |
| 23 | 4 | संद्गृह | सद्गृह |
| 24 | 17 | विनयाङ्कुर | विनयाङ्कर |
| 26 | 17 | तदृश्य | तद्दृश्य |
| 26 | 18 | अङ्कुरितं | अङ्करितं |
| 27 | 15 | धर्मध्वा | धर्मधुरा |
| 32 | 5 | यद्राम | यद्राम . |
| 34 | 16 | गुरूत्तमो | गुरुत्तमो |
| 36 | 14 | बहिस्स्थ | बहिस्सय |
| 37 | 23 | गुरूद्वहं | गुरुद्वहं |
| 37 | 24 | रूपाहृतैः | रूपाहृतैः |
| 38 | 18 | समासु | सभास |
| 39 | 12 | भोजकेष्टता? | भोजतकेष्टता? । |
| 39 | 14 | मुताभि | मृताभि |

| | | | |
|---|---|---|---|
| 40 | 7 | सङ्क्रान्त | सङ्कान्त |
| 41 | 17 | भाषासु | भाषा च |
| 42 | 3 | समालोक्य | स्मालोक्य |
| 42 | 8 | मेतदृगिति | मेतद्दिगिति |
| 43 | 6 | सङ्गीतरहस्य | सङ्गीतरहस्थ |
| 43 | 9 | मुदीक्षमाण | मुतीक्षमाण |
| 44 | 22 | निर्मलान्तरै | निर्मलन्तपरैः |
| 45 | 24 | स पाद | सपाद |
| 46 | 2 | चन्द्रमौलीश्वर | चन्द्रनौलीश्वर |
| 46 | 22 | सङ्ग्रहम् । | सङ्गहम । |
| 46 | 24 | स्तुवन्ति | स्तुमन्ति |
| 47 | 4 | प्रघोष्यते | प्रद्योष्यते |
| 48 | 5 | स्नान | स्नान् |
| 49 | 1 | समागतं | समागते |
| 49 | 8 | भवत्सु | भवत्सु |
| 50 | 3 | कामकोटिका | कामकोष्यि |
| 50 | 4 | व्यभासीच्च | भासीच्च |
| 51 | 13 | नाप्त | नाप्तृ |
| 53 | 24 | मनन्य | मनन्यो |
| 54 | 4 | रामेश्वरधाम | रामेश्वरथाम |
| 54 | 16 | सस्नौच ददौ | सस्ना च ददा |
| 55 | 22 | स्वागत | स्विहत |
| 56 | 3 | रुपन्याससदुक्ति | रूपन्याससुक्तिं |
| 56 | 10 | ष्वनुग्रहम् । | ष्वमुग्रहम् । |
| 58 | 9 | मातृभूतेश्वर | मातृभूतेश्वं |
| 59 | 12 | ऽस्मद्गुरु | ऽस्म द्रुरु |
| 67 | 3 | अन्त्यजाना | अन्तयजाना |
| 67 | 12 | जनगणाः | जनगणः |
| 78 | 2 | वीथ्यस्तोरणालङ्कृताश्च | --- |
| 78 | 4 | प्रतिगृह | पआति |

| | | | |
|---|---|---|---|
| 40 | 7 | सङ्क्रान्त | सङ्क्रान्त |
| 41 | 17 | भाषासु | भाषा च |
| 42 | 3 | समालोक्य | स्मालोक्य |
| 42 | 8 | मेतदृगिति | मेतद्विगिति |
| 43 | 6 | सङ्गीतरहस्य | सङ्गीतरहस्य |
| 43 | 9 | मुदीक्षमाण | मुतीक्षमाण |
| 44 | 22 | निर्मलान्तरै | निर्मलन्तपरैः |
| 45 | 24 | स पाद | सपाद |
| 46 | 2 | चन्द्रमौलीश्वर | चन्द्रनौलीश्वर |
| 46 | 22 | सङ्ग्रहम् । | सङ्गहम । |
| 46 | 24 | स्तुवन्ति | स्तुमन्ति |
| 47 | 4 | प्रद्योष्यते | प्रद्योष्यते |
| 48 | 5 | स्नान | स्नान् |
| 49 | 1 | समागतं | समागते |
| 49 | 8 | भवत्सु | भवत्सु |
| 50 | 3 | कामकोटिका | कामकोव्यि |
| 50 | 4 | च्यभासीच्च | भासीच्च |
| 51 | 13 | नाप्त | नापृ |
| 53 | 24 | मनन्य | मनन्यो |
| 54 | 4 | रामेश्वरधाम | रामेश्वरथाम |
| 54 | 16 | सस्नौच ददौ | सस्ना च ददा |
| 55 | 22 | स्वागत | स्विहत |
| 56 | 3 | रुपन्याससदुक्ति | रूपन्याससुक्ति |
| 56 | 10 | ष्वनुग्रहम् । | ष्वमुग्रहम् । |
| 58 | 9 | मातृभूतेश्वर | मातृभूतेश्वं |
| 59 | 12 | ऽस्मद्गुरु | ऽस्म द्रुरु |
| 67 | 3 | अन्त्यजाना | अन्तयजाना |
| 67 | 12 | जनगणाः | जनगणः |
| 78 | 2 | वीथ्यस्तोरणालङ्कृताश्च | --- |
| 78 | 4 | प्रतिगृह | पआति |

| | | | |
|---|---|---|---|
| 98 | 11 | इत्यपुपत्तः | इत्यपुत्तः |
| 99 | 16 | कारयितृन् | कारयितृन् |
| 102 | 7 | दासंप्लवमान | दाप्लवमान |
| 103 | 9 | समभास | व्यवभास |
| 104 | 19 | समक्त | स भक्त |
| 104 | 22 | स्वलङ्कृतां | स्वलंकर्ता |
| 108 | 23 | व्यसर्जयद्रा | व्यसर्जायद्रा |
| 109 | 3 | स्वलङ्कृते | स्वलङ्कृते |
| 109 | 7 | याच्यां | याच्या |
| 116 | 4 | मादिशन्मठात् ॥ | मादि श न्मठात् ॥ |
| 119 | 16 | माणवकाः | माणकूका |
| 119 | 19 | शेम्मङ्कुडि | शेम्मङ्गुडि |
| 120 | 1 | समृद्ध | सीमृद्ध |
| 121 | 1 | भूसुराङ्कित्ते | डेसुराङ्कित्ते |
| 123 | 20 | गुर्वाज्ञाया | गुर्वाज्ञया |
| 125 | 1 | पूर्वाचार्ये | पूर्वचार्य |
| 127 | 7 | पादेष्नानैतष्वा | पादेष्लानतेष्वा |
| 129 | 21 | रत्लोप्त | रत्नोप्त |
| 129 | 22 | जयेन्द्रः | ड्येन्द्रः |
| 129 | 24 | महान्मासा | महान्मयामासा |
| 129 | 27 | मठीयकेन्द्रम् । | महीयकेन्द्र । |
| 131 | 4 | किंचिदूह | किंचिदहु |
| 131 | 9 | द्वाविंशतिं | द्वाविंशति |
| 131 | 20 | चिराद्धृत | चिराद्धुत |
| 134 | 17 | अनुगतानिव | अनुग्रतानिव |
| 135 | 1 | न्द्रचरण | न्द्ररण |
| 135 | 11 | पठितृन् | पठितृन् |
| 135 | 14 | यतीन्द्रम् । | यतिन्द्रम् । |
| 135 | 15 | सत्प्रभाव | स प्रभाव |
| 135 | 23 | वेषा | वेपा |

| | | | |
|---|---|---|---|
| 136 | 7 | शिलातल | शितल |
| 137 | 14 | घर्मे | घर्मे |
| ˙138 | 10 | विश्रम्य | विश्राम्य |
| 140 | 24 | सुस्वागतेन | सुस्वागतन |
| 141 | 10 | दघ्मु | तघमु |
| 142 | 10 | ह्यघुना | ह्युघुना |
| 142 | 16 | हृदयो | हृतयो |
| 143 | 5 | मानान् | मानात् |
| 143 | 7 | परिसेवितुं च । | परिसेवितुं । |
| 143 | 16 | गुरुत्तमेन | कुरुत्तमेन . |
| 144 | 12 | चनाघुनिकरा | चनाधिनिद्रा |
| 145 | 4 | गुरुमासिचाताम् | गुरुपमासिचाताम् ॥ |
| 146 | 17 | गुरुणा | गुरुणा |
| 146 | 24 | तात्मसुख | तामसुख |
| 147 | 9 | यस्योर्घ्व | यस्तोर्घ्व |
| 147 | 13 | हितवहसौय | हित स्वौय |
| 147 | 15 | रघूलोऽप्यास्ते | स्तूलोऽप्यास्ते |
| 147 | 19 | जयवरः | जयवराः |
| 147 | 28 | तद्कृतस्य | तद्कृतस्य |